# मुख्यानुक्रमणिका

## प्रथमखण्डम् ( भूमिकादि )



## द्वितीयखण्डम् ( मूलग्रन्थः )



## तृतीयखण्डम् (अनुबन्धौ)

### प्रथमोऽनुबन्धः ( ग्रन्थकृत्प्रणीतलघुकाव्यानि )



### द्वितीयोऽनुबन्धः (समस्यापूर्तयः)

———

# आशीर्वचनम्

अनन्तश्रीविभूषितजगद्गुरुशंकराचार्यकाशीसुमेरुपीठाधीश्वरस्वामिमहेश्वरा-
नन्दसरस्वतीपादाना (कवितार्किकचक्रवर्तिपण्डितमहादेवशास्त्रिणाम्)

ब्रह्माण्डान्निष्पतन्तीं सुरपतिसदनं प्लावयन्तीं सहस्रै-
धाराणां भूतलं द्रागमयितुमखिलं नागलोकं प्रचण्डाम् ।
आकाशं व्यश्नुवानां नगपतिसुतया साद्भुतं दृश्यमानां
गङ्गां भ्रान्तां दधानश्चिरमतुलजटाकानने नः शिवोऽव्यात् ॥१॥

धातुर्लोकात्पतन्तीं विपुलजलमहापूरमुद्वेलयन्तीं
स्वर्लोकं द्यां समग्रां धरणितलमिदं मज्जयन्तीं वितण्डाम् ।
साश्चर्यं वीक्ष्यमाणां गिरिवरसुतया जाह्नवीं व्यूढदर्पां
कान्तारे जाटजूटे चिरमिह विवशां बिभ्रदव्याच्छिवो वः ॥२॥

धाराभिः स्फूर्जिताभिस्त्रिभुवनमतुलं व्याप्नुवानां त्रिमार्गां
गर्जातर्जां सृजन्तीं प्रलयघनघटाटाद्यमानाट्टहासाम् ।
श्रीमान् भूताधिनाथो गिरिवरतनयादृष्टसंरम्भभूमा
जूटारण्यैककोणेऽणुकमिव भवताद्भ्रामयन्भूतये वः ॥३॥

सावष्टम्भाट्टहासा सघनघनघटासम्पनीपत्यमाना
धाराटोपोत्कटाग्रैर्द्रुहिणकरकतो व्यश्नुवाना विहायः ।
दर्पाध्माता सचित्रं हरहृदयहरासभ्रमारम्भभूमिं
गङ्गा बिभ्रद्गणाग्र्यं पशुपतिरवतात्खेलयन् हर्षयन्नः ॥४॥

गाढो गर्वभराक्रमोत्सवसहः शश्वन्नवीनोदयः
सुश्लिष्टः समलङ्कृतो रसमहाभूपाललक्ष्मीर्निधिः ।
साश्चर्यं हृदयोपलब्धिनगरीसिंहासनासादितः
सभाव्यः शिवयो रसालमधुरो बन्धः स कोऽप्युज्ज्वलः ॥५॥

विद्याधर्मवयोऽतिगेन तपता सूक्ष्मेक्षिका तन्वता
ह्रस्वेनापि गरीयसा कवयता मूर्धानमुद्धुन्वता ।
अन्तर्गर्भवसुन्धराप्रतिभटप्रज्ञासमज्ञाजुषा
बन्धः कोऽपि समुद्धृतः सुकविना वेद्यो विदां वन्दितैः ॥६॥

सौहित्यं परितो जिहीर्षति ततः सन्धित्सते मोहनं
मध्ये मानसमुन्निनीषति धिया वैयाकुलीं कालिकाम् ।
नैवाधित्सति काचनापि सरसा सश्लाघनीया दशा
तद्भो कीदृगसौ प्रबन्धरचनामोदाय बन्धोद्यमः ॥७॥

वर्णालीं सिबरीभरीतु कुटिलां चर्कर्तु मूर्धव्यथां
पास्पर्धीतु रसेश्वरैः स्वरचनां बन्धोद्धतां भावयन् ।
नो रीतिर्न च वृत्तिरस्ति न रसो नालङ्कृतिर्नो गुणाः
काटाट्या विकटाटवी विटपिनां वेतालमालाकुला ॥८॥

सत्यं पल्लितमस्ति तत्र भवतोऽग्रपतस्य कस्यापि ते
द्राक्षामम्लतरां वदन्ति कृपणाः श्रान्ताः परास्तोद्यमाः ।
शाब्दे ब्रह्मणि साधिकारवचसां क्लिष्टक्रमाभ्यासिनां
बन्धाली विजरीहरीति सुभगा विद्वेश्वराणां मुदे ॥९॥

खेलत् कौशलमुल्लसत्पदघटाटोपं क्रमव्युत्क्रम-
प्रोद्घाट्याक्षरगह्वरं सुघटितं व्युत्पत्तिशक्तिप्रभम् ।
नानार्थप्रतिरूपदर्शनसुधाधाराभिषेकोत्सवं
काव्यं बन्धुरबन्धविभ्रमचरं कश्चित्कृती रोचयेत् ॥१०॥

अस्त्येवं मधुरो रसो न जनयत्यम्लं विनोदन्यतां
किं वक्रा गतिरुद्धतस्मितमुदं नोद्भावयत्युज्ज्वलाम् ।
काकानां निनदा भवन्ति कृतिनः पंकध्वनीनां रतौ
पक्षस्तद्वदिहाद्रिमः फलमते राद्धान्तशुद्धान्तताम् ॥११॥

बन्धाः केचन सन्ति येषु निहिताः शृंगारसाक्षात्क्रिया
भावोद्बन्धवशाश्रयन्ति रजनीं कोशेषु के नालयः ।
नैवालं निजवैभवाय स विभू रागानुबन्धं विना
बन्धे काव्यकथोत्तरङ्गसुभगे कस्मात्सखे नादरः ॥१२॥

वर्णाली विकटाटवी सुघटिता गुल्मेऽन्यताधायिनी
रूपन्यासविकल्पकल्पनकलाः कालेङ्गिताश्चित्रणे ।
विन्यासोद्भटपाटवोत्कटलसल्लावण्य-पूर्णार्णवे
निध्येया न भवेयुरूर्जितगुणा बन्धाः कथं स्फूर्जिताः ॥१३॥

वैयाधो नहि वागुरा प्रभवितुं शक्नोति बन्धोद्धुरा
कामं सा सुषमाभिरामरमणी संजायतां घट्टिता ।
किन्त्वानन्दमहोत्सवाय महते मौनाङ्कबन्धाः शुभा
यातायुप्रजमानसस्य सुचिरं भूयो भवन्त्येकलाः ॥१४॥

श्रीमद्भारतकूटकूटघटितं पद्माघ्र्यगर्भोद्धृतं
सिद्धत्खण्डनसाद्यकोटिकुटिलं हेरम्बदन्तोत्कटम् ।
पिष्टप्लुष्टविपुष्टमुष्टिभिदुरं प्राभञ्जनेर्गह्वरं
बन्धोद्धर्यमिदं विभावयन भो दृष्टिच्छटाक्षेपणैः ॥१५॥

सर्वो धातुगणः क्रियाविधिपुलो जिह्वाजिरे राजते
विद्यास्तद्धितवृत्तयः प्रमुदिताः क्रीडन्ति कण्ठस्थिता ।

कृरसज्ञा विलसन्ति प्रत्ययघटा स्वान्तान्तरालाम्बरं
येषां ते विभवो भवन्ति कृतिनो बन्धोत्कटे कानने ॥१६॥

शृङ्गारे रसराजवैभवभरे वात्स्यायनेनोद्धृता
बन्धा केचन केचिदत्रभवतां योगेश्वराणां क्रिया ।
किन्तु प्रस्तुतबन्धबन्धनविधौ नाडिन्धमे ध्यायतां
सिद्धाना गतयो जयन्ति सफला लावण्यलीलाञ्चिता ॥१७॥

यावद्वस्तुविचित्रचित्रणकला आश्चर्यसीमातिगा
रेखावर्णविभूषणा सुघटिता धावन्ति यत्ताङ्किता ।
वार्ता सजनयन्ति वाच्यभरितां कैश्चिद् रहस्याङ्कुरै-
रन्यैरत्र विमोहमग्नहृदयै कुड्यैरिव स्थीयते ॥१८॥

बन्धान् भावभरोत्तरङ्गहृदयान् विस्मेरतासस्कृतान्
प्रत्यावृत्तिविलक्षणक्षणचणावर्णावलीर्बन्धत ।
उत्पाटयानुगुणा नयन्ति पदवीं ये सन्मनीषाजुष-
स्ते धन्या कवयो जयन्ति जगतीं ते कुर्वते कीर्तिताम् ॥१९॥

बन्धेभ्योऽस्तु नमो नम कवयता पुण्यात्मलाभश्रिया
बन्धदस्य प्रतिपादमुद्धतधियोऽधिका समज्ञागृहान् ।
अभ्यासांश्चरमप्रकर्षभरितान् सभावयदभ्यो दृढान्
ग्रीष्मात्युष्णरजश्चयोदभवदघव्रातान् ददद्भ्यो भृशम् ॥२०॥

जन्मभ्योऽगणितेभ्य एत्य सुकृतव्रातान् परा निर्मिती
कुर्वाणा विजनोत्सवा कवयता मूर्ध्नि स्थिता सूरय ।
स्वभ्यस्ता सरलप्रबन्धरचनालीलाविलासक्रमे
ते नून कलयन्तु बन्धसरितो गाढ़ु रसोदञ्चिता ॥२१॥

अर्थानां शतक सहस्रमथवा लक्ष च कोटिं तथा
सख्याभावमनर्गल प्रसुवते पद्यात्मिका धेनव ।
एकैके प्रतिभाजुषा कवयतां वाग्देवतानुग्रहा
बन्धा यत्र कृता जयन्ति कवने पूर्णे क दृष्टा कृती ॥२२॥

शस्याली सुभगा शरत्प्रसृमरां पक्वां मनोहारिणीं
सीमासीमफलप्रसाररसरसा गुच्छाच्छमालालकाम् ।
स्तम्बाडम्बरशालिनीं कलयते यद्वत्प्रहृष्टो गृही
तद्वद्बन्धमहोत्सव वितनुते पुण्यात्मलाभ कवि ॥२३॥

य शब्दोऽक्षरसत्त्रयेण गमयत्येक क्रमव्युत्क्रमै-
रर्थं नीरजनि विमूढतनय शीतोद्भव पङ्कजम् ।
आद्याद् भास्करदैवत गणमहो द्वाभ्यां तथा जीवन
त यो वेत्ति सुधीर्ध्रुव स विजयी सवत्सरोऽत्रावधि ॥२४॥

यो गङ्गामुददीधरद्रसमसौ पुष्णाति तीर्येश्वरो
हारं रूपमुपर्यध. परमिदं धत्तेऽप्रणीर्देवता ।
दीव्यद्गौरगुणाभ्रसिन्धुरमराधीशार्चिताङ्घ्रिः शुभा
माङ्गल्यं तनुतां शिवान्विततनुः सर्वज्ञशक्तिः श्रिया ॥२५॥

इयं कामधेनुस्तथाहि

(क्रमेण)

गङ्गारसमसौ धत्तेऽप्रणीर्गौरगुणामरा ।
ईशार्चिताङ्घ्रिर्माङ्गल्यं तनुतां तनुतां शिवा ॥१॥

तीर्येश्वरो रूपमुपर्यधो धत्तेऽप्रदेवता ।
अभ्रसिन्धुमराधीशार्चिताङ्घ्रिस्तनुतां शिवा ॥२॥

(व्युत्क्रमेण)

सर्वज्ञशक्तिस्तनुतां माङ्गल्यं रामदेवता ।
धत्ते परं रूपहारमसौ रसमदीधरत् ॥१॥

श्रिया शक्तिर्वितनुतां मां शुभा गौरदेवता ।
धत्ते परमिदं रूपं हारं पुष्णात्यसौ रसम् ॥२॥ एषा दिक्

(आर्या)

गङ्गामुद् रसहारं रूपं धत्तेऽप्रणीर्दीव्यद् ।
गौरगुणाधीशार्चिस्तनुतां वितनुर्ज्ञशक्तिः श्रीः ॥५॥

---

॥ ई ॐ श्रीः ॥

# चित्रप्रशंसा

## गोकर्णवासिब्रह्मर्षिदैवरातमहोदयानाम्

[वेदमन्त्रद्रष्टृब्रह्मर्षिदेवरातमहोदयै—"वेदहृदयम्" इतिनामकस्वीयग्रन्थे बिन्दु-रेखा-संख्या-अक्षर-चित्र-वर्ण-मुद्रा-इति-सप्तसंकेतानां वेदार्थाभिगमे सम्यगुपयोगित्वं व्याख्यातम्। अपूर्वो ग्रन्थोऽयमद्याप्यप्रकाशितः, तत्रैकदेशीया द्वात्रिंशच्छ्लोकात्मिका चित्रसंबन्धिनी कलेयं ब्रह्मर्षिभिर्महदनुग्रहेण प्रस्तुतग्रन्थे प्रकाशनार्थं प्रदत्ता। चित्रकाव्यसंग्रहग्रन्थेऽस्मिंश्चित्रस्य संकेतभाषायाः शास्त्रीयविवृत्या सुधीपाठकाः परमुपकृता भविष्यन्तीति मन्ये।—सम्पादिका]

"चित्रं" रूपकसत्प्रतीकगुणकं नामानुरूपार्थकं
शब्दस्यापि सदर्थवस्तुपरकं वाचश्च वाच्यार्थकम्।
प्रत्यक्षं च परोक्षमान्तरतमं तच्चापरोक्षार्थकं
रत्नं सत् प्रतिबिम्बवत् सुरचितं तत्त्वेन लक्ष्यार्थकम् ॥१॥

चित्रं रूपकलाकृतेर्लिपिमुखात् सद्बिन्दुरेखाकृतेः
लोकेऽस्मिन् सुविचित्रभावरचितं वर्णैः पुना रञ्जितम्।
बिम्बग्राहकयन्त्रतः सुनिपुणं छायामुखेनार्चितं
प्रत्यक्षं प्रतिबिम्बमेव सकले सद्वस्तु सद्रूपकम् ॥२॥

सद्बिन्दोः प्रतिरेखयाऽङ्कपरया तत्त्वाप्तया सङ्ख्यया
साक्षादक्षरतोऽभिधानुगुणतो नामानुरूपाकृतेः।
वर्णैर्लोहितशुक्लनीलगुणकैः सन्मुद्रया भद्रया
वर्ण्यं चित्रविचित्ररूपरचनायोगेन तत् संस्कृतेः ॥३॥

चित्रं तत् परवस्तुबोधपरकं सङ्केततत्त्वोच्चयात्
सञ्ज्ञारूपगुणक्रियादिमुखतो भावानुरूपान्वयात्।
ज्ञानाद् भावनया क्रियाप्रमुखया युक्ताकृतेर्योगतः
ज्ञेयं तत् प्रतिकल्पितं कविवरैस्तद् विश्वरूपाञ्चितम् ॥४॥

चित्रं वस्तुपरं प्रतीकमपरं श्रेष्ठं च लोकोत्तरं
सर्वाङ्गैः सुमनोहरं सुललितं लावण्यसत्त्वाकरम्।
सर्वार्थैः परिपूर्णमेव सकलं सल्लक्षणासेचकं
सर्वाकर्षणसद्गुणैः सुवलितं साध्यं सतां रोचकम् ॥५॥

सच्चित्रं हि परोक्षवस्तुगमकं वाच्यार्थसद्वाचकं
तस्यालम्बनतो गवेषणमुखात् सद्वस्तुसम्प्रापकम्।
छायामात्रगुणाप्तलक्षणमुखाल्लक्ष्यार्थसन्दर्शकं
बाह्यान्तर्यपरात्मवस्तुपरकं तत्त्वप्रमादर्शकम् ॥६॥

प्रत्यक्षं परमावलम्बनमिदं ज्ञाने च सद्भावने
प्रत्येकेषु परार्थबोधरसदं ध्यानादिसत्साधने ।
प्राधान्यात् परबिन्दुवत् प्रतिभवेदस्तित्वबोधास्पदं
प्रामाण्यात् स्वपरायणं श्रुतिविदां चित्रं समर्थं स्वयम् ॥७॥

दृग्बिन्दोश्च समन्वयात् सुललितं सन्दर्शनीयं हृदा
हृद्बिन्दोः प्रतियोगतः सुकृतिना प्रज्ञानचिद्योगिना ।
चित्रं तत् प्रतिचिन्तनीयमुवियात् सद्यः सुहृद्योगिना
पात्रं सर्वजनैकहृद्विकसने सर्वार्थसम्पादने ॥८॥

पूर्णं तत्परमात्मवस्तुनि विदां साक्षात्कृतेर्योगतः
प्रायः पूरुष-मानुषादिविधतां सच्छास्त्रदृष्ट्या दिशत् ।
पूर्णं सत्प्रतिमात्मकं विमृशतां चित्रं प्रमाणास्पदं
प्रत्नं सत्प्रतिपादकं सुविदुषां सद्वस्तुबोधप्रदम् ॥९॥

नीरूपस्य च वस्तुनः सुवचने तत्त्वानुरूपैर्गुणै-
र्नाम्ना कल्पितमाकृतेर्विरचितं वर्णादिना रञ्जितम् ।
तद्वद्दिव्यवनस्पतेरपि नृणां ज्ञाने च तन्मार्गणे
तत्प्राप्तानपि चित्रमेव शरणं सद्वस्तुसम्प्रापणे ॥१०॥

सिंहव्याघ्रगजादिशब्दमुखतः श्रोत्रेण भूयः श्रुताः
सिंहाद्याः पशवः परोक्षकतया ते नाममात्रान्मताः ।
वाचा च प्रतिबोधिता अपि परैर्वाच्यार्थबोधोचिताः
ते शक्तिग्रहमन्तरेण मनुजैः प्राप्तुं न शक्यास्त्विताः ॥११॥

चित्रं तु प्रतिरूपसत्त्वकलया भावप्रधानं स्वयं
चिच्छक्त्याऽञ्चितमूहितं प्रतिकृतेस्तद्विश्वरूपान्वयात् ।
दृश्यं ज्योतिषयोगतः समुदगादिग्व्रात्मचिद्दर्शकं
दृक्छक्त्या प्रतिवृश्यतां प्रतिपदं संवेद्यमादर्शकम् ॥१२॥

लोकेऽस्मिंश्च कलाकृतेः कविवरो लोकोत्तरं वस्तु सत्
सङ्केतेन विमर्शयत्समदृशा तत्त्वादिबोधोद्यतः ।
यद् यद् भावयतीह सत्त्वमनसा तत्त्वप्रकाशोदये
सर्वं तत् क्षमते स्वयं विरचितुं चित्रं स्वभावान्वयात् ॥१३॥

वाचाऽनिर्वचनीयमप्यनु पदं वाच्यं च वस्तुद्वयं
नीरूपं च निरूपितं श्रुतिमुखात् सद्भावतः संभृतम् ।
चित्रेणापि सुरूपितं कृतिमुखात् सन्मौनचिन्मुद्रया
नेत्रेण प्रतिदृश्यतामनुकृतेः सद्रेखया भद्रया ॥१४॥

सिद्धा चित्रलिपिः प्रमाणनियता सद्रूपबोधोचिता
सिद्धे लौकिकवस्तुनि प्रकृतितः प्रत्यक्षतत्त्वाञ्चिता ।
हेतुः स्यात् प्रतिरूपवस्तुविषये शब्दार्थसत्प्रत्ययाद्
अप्रत्यक्षवनस्पतिप्रभृतिके तन्नामरूपान्वयात् ॥१५॥

प्रत्यक्ष च परोक्षमप्यतितत शारीरक स्वान्तर
सर्व वस्तु सचित्ररूपलिपितस्तत्त्वेन बुध्येत् परम् ।
सिद्ध सविदि साधन लिपिमुख तद्गुप्तसङ्केतक
सामान्येन समस्तवस्तुनि भवेत् तद्वैदिक लौकिकम् ॥१६॥

नोरूपस्य हि वस्तुनस्त्ववगतौ तद् रूपबिम्बादिक
न स्यात प्रत्ययकारण प्रकृतित सिद्धस्य पारोक्षत ।
सर्वाधारमसत्त्वभावनमुखादनेकमप्यन्तत
बिन्दौ पूर्णमुखान्निरूपितमदो विज्ञायते चित्रत ॥१७॥

लोके वाङ्मुखतो यथा समभित सर्वार्थसम्प्रत्यय
शून्य वाऽग्रमभाव-मौनमपि तत् सत्प्रत्ययैकास्पदम् ।
मौनेन प्रकटीकृत श्रुतिमुखात् सद्ब्रह्मतत्त्व विदा
वेदे पूर्णमद समर्पितमिव बिन्दुप्रतीकास्पदम् ॥१८॥

चित्र तत्प्रतिरूपतो रचनया सद्रूपित रेखया
सद्वर्णैरुपवर्णनादुपमित ज्ञात श्रुत कल्पितम ।
अङ्गैर्हस्तपदाङ्गुलान्वितमुखैरङ्काङ्कितं सस्कृत
तत पूर्णाकृतमन्तरात्मगुणिना दृग्बिन्दुनालङ्कृतम् ॥१९॥

सिद्धे चित्रकलेव मूर्तिलिपित साध्ये च वस्तुन्यपि
प्रत्यक्षाकृतिरूपसर्वगुणतस्तन्मूर्तिवल्ऌप्ते पुन ॥
साजात्याप्तसचेतनात्मकलया व्यक्ते समुत्पादनात
कौशल्य स्वविशिष्टचित्रकलया सातन्यसाधारणात् ॥२०॥

सर्वप्राणिगतात्मनामभिमता सा चेतनाप्ता कृति
सक्तोपाधिकदेहकोशकरणं स्त्रीपुविद्याद्याकृति ।
तद्वत् केवलतेजसात्मवपुषा तद्देवताना मुदे
प्रत्यक्षाद्यवलम्बन तनुरिय सम्भावने सविदे ॥२१॥

तेजोऽब्वन्नगुणात्मना दिविषदा रूपैर्गुणैस्तात्त्विकै
सिद्ध लोहित शुक्ल-नीलरुचिर मूर्तस्वरूप मतम् ॥
सत्य विश्वविचित्ररूपकलया सङ्केतसङ्कल्पित
सत्त्वाल्लोकविलक्षण च परम चित्रैकलक्ष्य समम् ॥२२॥

सर्वाङ्गेषु पर प्रधानमुदित शीर्ष शरीरे श्रित
सर्वार्थेषु परिप्रवृत्तिविहित शीर्षण्यसत्त्व श्रुतम् ।
सप्ताङ्गाप्तसमस्तसविदुदये प्राणात्मसत्त्वाश्रित
सप्तप्राणगतैर्विशेषितमिद श्रेष्ठ चिदात्मोच्छ्रितम् ॥२३॥

ब्रह्मण्य प्रथम शिरोऽग्र मुखग ज्ञानप्रधान स्वयं
ब्रह्मात्मोदितवेदवाक्सुविहित चैतन्यसत्त्वान्वयम् ।
ब्रह्मात्मन्यपि पुरुषे मुखपर तद् ब्राह्मण सश्रुत
ब्रह्मेन्द्रात्मसु सविदे सुवचने मुख्य सदङ्ग श्रितम् ॥२४॥

तस्माद् ब्रह्ममुखात् समं समुदगात् तद् ब्रह्म वेदात्मकं
तस्मै ब्रह्मविदात्मने भगवते मुख्यं स्ववाक्सत्त्वकम् ।
तस्यां वाचि समस्तसंविदुदयात् सत्त्वप्रकाशान्मुखं
तस्मिन् विश्वमिदं प्रतिष्ठितमिति प्रज्ञानमुख्यार्थकम् ॥२५॥

एकं शीर्षमिदं समस्तविषयैः पूर्णोत्तमाङ्गं भवेद्
एकानेकबहुत्वविश्वमुखतः स्याद् विश्वरूपार्थकम् ।
एकद्वित्रिचतुष्कपञ्चकमुखैः षड्भिस्तथा सप्तभिः
साष्टाभिर्नवभिस्तथैव दशभिः सैकादशास्यात्मभिः ॥२६।

विश्वैः सार्थ-सहस्रशोऽपि च मुखैः पूर्णं परं पूरुषं
वेदे तत्त्वविशिष्टरूपकमुखैर्विश्वात्मकं तुष्टुवुः ।
तत्त्वार्थादिविशिष्टसंविदुदये सद्रूपकं कल्पितं
चित्रं विश्वविचित्ररूपकमयं सद् विश्वरूपं बभौ ॥२७॥

एव धातु-शिला-मृदादिरचिता काष्ठादिना निर्मिता
मूर्तिः सा मुख-पाणिपादकरणैः प्रत्यक्षचित्रात्मिका ।
अप्रत्यक्षसमस्तवस्त्ववगमे क्लृप्ता प्रमाणात्मिका
स्यात् सर्वानुमता प्रसादकतमा सर्वार्थसंवेदिका ॥२८॥

तद्वत् तात्त्विकरूपवस्त्ववगतौ यन्मूर्तिसत्कल्पना
शब्दादप्यधिकं प्रमाणमुदितं मूर्तस्वरूपार्थिना ।
गायत्र्या अपि दिङ्मुखैः पशुपतेस्तत्पञ्चवक्त्रात्मकं
वाग्भिः प्राणमुखैर्निरूपितमिदं सत्यं प्रतीकात्मकम् ॥२९॥

भूयो लोहितशुक्लकृष्णरुचिरैः प्रत्यक्षवर्णैर्युतं
रूपं तत्त्वगुणत्रयात्मकमिति प्रायः प्रसिद्धं श्रुतम् ।
सूर्याश्वात्मकसप्तरश्मिगमकास्ते सप्त वर्णाः श्रुताः
सत्यं रूपकवस्तुवर्णनमिदं प्रत्यक्षवर्णाकृतेः ॥३०॥

सद्बिन्दोः प्रतिरेखया विरचितं नेत्रादिसङ्ख्याङ्कितं
सद्बोधोचितवाचकाक्षरचितं तन्नामरूपाञ्चितम् ।
चित्रं तत् सुविचित्ररूपखचितं वर्णैः समं रञ्जितं
यन्त्रं शान्तगभीरया समुचितं सन्मुद्रयाऽप्यूर्जितम् ॥३१॥

सङ्केतैरपि सप्तभिः सुविहितं लेखानुबद्धैः समैः
सङ्ख्यातं प्रतिबिम्बमित्युपमितं बिन्दुप्रमुख्यैरिमैः ।
वाचाऽनूदितमेव वस्तु सकलं वेद्यं तदन्यैः समं
वाच्यं तत् परमार्थवस्तुविभवं चित्रं तदन्यासमम् ॥३२॥

प्रत्यक्ष च परोक्षमप्यतितत शारीरक स्वान्तर
सर्वं वस्तु सचित्ररूपलिपितस्तत्त्वेन बुध्येत् परम् ।
सिद्ध सविदि साधन लिपिमुख तद्गुप्तसङ्केतक
सामान्येन समस्तवस्तुनि भवेत् तद्वैदिक लौकिकम् ॥१६॥

नीरूपस्य हि वस्तुनस्त्ववगतो तद् रूपबिम्बादिक
न स्यात् प्रत्ययकारण प्रकीर्तित सिद्धस्य पारोक्षत ।
सर्वाधारमसत्त्वभावनमुखादज्ञेयमप्यन्तत
बिन्दो पूर्णमुखान्निरूपितमदो विज्ञायते चित्रत ॥१७॥

लोके वाङ्मुखतो यथा समभित सर्वार्थसम्प्रत्यय
शून्य चाऽग्रमभाव-मौनमपि तत् सत्प्रत्ययैकास्पदम् ।
मौनेन प्रकटीकृत श्रुतिमुखात् सद्ब्रह्मतत्त्व विदा
वेदे पूर्णमद समर्थितमिद बिन्दुप्रतीकास्पदम् ॥१८॥

चित्र तत्प्रतिरूपतो रचनया सद्रूपित रेखया
सद्वर्णैरूपवर्णनादुपमित ज्ञात श्रुत कल्पितम् ।
अङ्गैर्हस्तपदाङ्गुलान्वितमुखैरङ्काङ्कितै सस्कृत
तत पूर्णाकृतमन्तरात्मगुणिना दृग्बिन्दुनालङ्कृतम् ॥१९॥

सिद्धे चित्रकलेव मूर्तिलिपित साध्ये च वस्तुन्यपि
प्रत्यक्षाकृतिरूपसर्वगुणतस्तन्मूर्तिक्लृप्ते पुन ॥
साजात्याप्तसचेतनात्मकलया व्यक्ते समुत्पादनात्
कौशल्य स्वविशिष्टचित्रकलया सान्न्यमाधारणात् ॥२०॥

सर्वप्राणिगतात्मनामभिमता सा चेतनाप्ता कृति
सर्वतोपाधिकदेहकोशकरणै स्त्रीपुंविधाद्याकृति ।
तद्वत् केवलतेजसात्मवपुषा तद्देवताना मुदे
प्रत्यक्षाद्यवलम्बन तनुरिय सम्भावने सविदे ॥२१॥

तेजोऽब्बस्गुणात्मना दिविषदा रूपैर्गुणैस्तात्त्विकै
सिद्ध लोहित-शुक्ल-नीलरुचिर मूर्तस्वरूप मतम् ॥
सत्य विश्वविचित्ररूपकलया सङ्केतसङ्कल्पित
सत्त्वाल्लोकविलक्षण च परम चित्रैकलक्ष्य समम् ॥२२॥

सर्वाङ्गेषु पर प्रधानमुदित शीर्ष शरीरे श्रित
सर्वार्थेषु परिप्रवृत्तिर्विहित शीर्षण्यसत्त्व श्रुतम् ।
सप्ताङ्गाप्तसमस्तसविद्वये प्राणात्मसत्त्वाश्रित
सप्तप्राणगतैर्विशेषितमिद श्रेष्ठ चिदात्मोच्छ्रितम् ॥२३॥

ब्रह्मण्य प्रथम शिरोऽत्र मुखग ज्ञानप्रधान स्वय
ब्रह्मात्मोदितवेदधार्युविहित चैतन्यसत्त्वान्वयम् ।
ब्रह्मात्मन्यपि पूरुषे मुखपर तद् ब्राह्मण सश्रुत
ब्रह्मेन्द्रात्मसु सविदे सुवचने मुख्य सदङ्ग श्रितम् ॥२४॥

तस्माद् ब्रह्ममुखात् समं समुदगात् तद् ब्रह्म वेदात्मकं
तस्मै ब्रह्मविदात्मने भगवते मुख्यं स्ववाक्सत्त्वकम् ।
तस्यां वाचि समस्तसंविदुदयात् सत्त्वप्रकाशान्मुखं
तस्मिन् विश्वमिदं प्रतिष्ठितमिति प्रज्ञानमुख्यार्थकम् ॥२५॥

एकं शीर्षमिदं समस्तविषयैः पूर्णोत्तमाङ्गं भवेद्
एकानेकबहुत्वविश्वमुखतः स्याद् विश्वरूपार्थकम् ।
एकद्वित्रिचतुष्कपञ्चकमुखैः षड्भिस्तथा सप्तभिः
साष्टाभिर्नवभिस्तथैव दशभिः सैकादशास्यात्मभिः ॥२६।

विश्वैः सार्ध-सहस्रशोऽपि च मुखैः पूर्णं परं पूरुषं
वेदे तत्त्वविशिष्टरूपकमुखैर्विश्वात्मकं तुष्टुवुः ।
तत्त्वार्थादिविशिष्टसंविदुदये सद्रूपकं कल्पितं
चित्रं विश्वविचित्ररूपकमयं सद् विश्वरूपं बभौ ॥२७॥

एवं धातु-शिला-मृदादिरचिता काष्ठादिना निर्मिता
मूर्तिः सा मुख-पाणिपादकरणैः प्रत्यक्षचित्रात्मिका ।
अप्रत्यक्षसमस्तवस्तववगमे क्लृप्ता प्रमाणात्मिका
स्यात् सर्वानुमता प्रसादकतमा सर्वार्थसंवेदिका ॥२८॥

तद्वत् तात्त्विकरूपवस्त्ववगतौ यन्मूर्तिसत्कल्पना
शब्दादप्यधिकं प्रमाणमुदितं मूर्तस्वरूपार्थिना ।
गायत्र्या अपि दिङ्मुखैः पशुपतेस्तत्पञ्चवक्त्रात्मकं
वाग्भिः प्राणमुखैर्निरूपितमिदं सत्यं प्रतीकात्मकम् ॥२९॥

भूयो लोहितशुक्लकृष्णरुचिरैः प्रत्यक्षवर्णैर्युतं
रूपं तत्त्वगुणत्रयात्मकमिति प्रायः प्रसिद्धं श्रुतम् ।
मूर्धन्यात्मकमन्तरश्मिकामकान्ते. सप्त. वर्णाः. श्रुताः.
सत्यं रूपकवस्तुवर्णनमिदं प्रत्यक्षवर्णाकृतेः ॥३०॥

सद्बिन्दोः प्रतिरेखया विरचितं नेत्रादिसद्रूपाङ्कितं
सद्बोधोचितवाचकाक्षररचितं तन्नामरूपाञ्चितम् ।
चित्रं तत् सुविचित्ररूपखचितं वर्णैः समं रञ्जितं
सवक्त्रं शान्तगभीरया समुचितं सन्मुद्रयाऽप्यूर्जितम् ॥३१॥

सङ्केतैरपि सप्तभिः सुविहितं लेखानुबद्धैः समैः
सद्रूपातं प्रतिबिम्बमित्युपमितं बिन्दुप्रमुख्यैरिमैः ।
वाचाऽनूदितमेव वस्तु सकलं वेद्यं तदन्यैः समं
वाच्यं तत् परमार्थवस्तुविभवं चित्रं तदन्यासमम् ॥३२॥

---

# ग्रन्थकर्तुः परिचयः

विहार-राज्ये 'शाहाबाद' (आरा) मण्डलान्तर्गतं 'सहसराम' नाम्ना ख्यातं नगरमस्ति। पुराऽऽरामसहस्रेणोपशोभितत्वाद् आम्रसहस्रेणोपशोभितत्वाद् वा सहस्रारामेति, सहस्राम्रेति वा तदीयं प्राचीनमभिधानं कैश्चिदैतिहासिकैरनुमीयते। शेरशाहस्य जन्मभूमिस्तदेव नगरमिति नाविदितं सर्वेषाम्। तत्रैव सुबहोः कालात् (अवधप्रान्तादागतत्वात्) 'अवधियार' पुरीया कौसल्यगोत्रोत्पन्ना 'मगः' इति ख्याता शाकद्वीपीया पाठकेत्युपाधयो ब्राह्मणाः पश्चिमे भागे निवसन्ति। तेष्वेव श्रीदुनियादत्तपाठकस्य पौत्राः श्रीविश्वेश्वरपाठकस्य प्रथमे पुत्रा इमे चित्रकवयः श्रीरामरूपपाठकमहोदया वि० सं० १९४८, पौषकृष्णैकादश्यां शनिवासरे (१८९१ ई०) राजपत्यभिधानाया देव्या जन्म गृहीतवन्तः। एतदनुजाश्चत्वारः सञ्जाताः—श्रीरामस्वरूपपाठकः, श्रीहरिनाथपाठकः, श्रीश्रीनाथपाठकः, श्रीभागवतपाठकश्चेति। एतेषु प्रथमावुभौ सम्प्रति स्वर्गीयौ। पिता स्व० श्रीविश्वेश्वरपाठकः पौरोहित्यकुशलश्चान्द्रायणचातुर्मास्यादिव्रतनिष्ठः सुकविहृदयश्चासीत्। एकक: स्वगृहभारं साधारणजीविकया संवहन् पिता स्वपुत्रान् विद्यालये प्रेषयामास। प्रथमं जन्मभूमावेव श्रीकालीप्रसादमिश्रमहोदयादधीतसारस्वतव्याकरणोऽयं चित्रकविः सप्तदशवर्षदेशीयः काश्यां श्रीस्वामिहरिहरानन्दगिरियतीनामन्तिके काव्यव्याकरणकोषादिग्रन्थाध्ययनं परमया गुरुभक्त्या समारब्धवान्। स्वपितुर्गुरोश्च प्रेरणया बीजरूपेणास्य हृदये विद्यमाना प्रतिभा समुन्मिमील। तस्मिन्नेवाध्ययनक्रमे विहारोत्कलसंस्कृतसमिते 'काव्यतीर्थं' परीक्षाऽप्यनेनोत्तीर्णा। पित्रे साहाय्यप्रदानं, अनुजेभ्यश्चाध्ययनानुकूलावसरदानमिति कर्तव्यद्वयं चित्रकविमिमं काश्यामवस्थातुमत्युत्सुकमपि नानाजालपरिगृहीतगृहकार्यव्यापृतमकरोत्। ततः कदाचिद् ग्राम्यजनमध्यवर्ती पुराणकथाप्रसङ्गेन, कदाचित् स्वकरानीतपलालहरितृणादिकैः गोसेवया, कदाचित् स्वगृहोपगताध्ययनशीलशिष्यसमुदायमध्यस्थः शास्त्रालापेन, कदाचिन्निरन्तरभ्रमणपरायणः स्वानुजकन्यानां विवाहयोग्यवरान्वेषणचिन्तया, कदाचिदन्तर्गूढघनव्यथः स्वभ्रातृ-पुत्र-भ्रातृजानामकालसंस्थितिवज्रपातेन बहूनि यौवनदिनानि नीतवान्। (साधारणेष्वपि काव्येषु श्रुतेषु विगलदश्रुनिर्झरोऽप्ययं विपद्वज्रपातेषु नैकमप्यश्रुकणं मुमोचेत्याश्चर्यम्! ) प्राप्तायां जरावस्थायां गृहाद् विमुक्तिमात्मनः समीहमानः स्वर्गीयस्य ज्येष्ठसूनोः श्रीचन्द्रशेखरस्य विधवायाः पत्न्याः तत्पुत्रस्य रामरक्षाशिशोश्च रक्षणभारं श्रीचन्द्रमोहने सूनौ न्यस्य भ्रातरौ भ्रातृपुत्राश्च स्व-स्वभागलाभसन्तुष्टान् विधाय स्वाध्ययनकालादेवानुचिन्तितां पुण्यनिचयलभ्यां काशीं प्राप्तवान्। काश्यां नगर्यामस्य बह्व्यास्संस्कृतपाठशालायामवैतनिकमध्यापनं भगवद्विश्वनाथकृपालवं मत्वा बहून् संस्कृतविद्याव्यसनिनश्छात्रान् काव्यनिर्माणे प्रवर्तयामास। गुरवः विशिष्य (पूर्वाश्रमे) कवितार्किकचक्रवर्तिनः श्रीमहादेवशास्त्रिवर्या अस्य विनयं श्रद्धां च मुक्तकण्ठं प्रशशंसुः प्रशंसन्ति च। काव्यनिर्माणस्येश्वराराधनमेव फलं मन्वानस्य निरन्तरं प्रशान्तस्यास्य वर्षाणां चतुर्दश काश्यामद्यावधि व्यतीतानि। प्राणाः काश्यामेव निष्क्रमेयुरितीमामेवाशां मनसि निधाय काशीवासोऽनेन विधीयते।

चित्रकविना चित्रकाव्यातिरिक्तानि कतिचिन्मौलिकानि लघुकाव्यान्यपि विरचितानि सन्ति तेषु यथा—भक्तकण्णपचरितम, रेणुकाचार्यचरितम्, एकलिङ्गचरितम्, दाशार्हराजकथा धर्मगुप्तचरितम् एकाम्रेश्वरकथा, रामायणम् (बालकाण्डमात्रम्, अपूर्णम्) ।

चित्रकवेर्हृदये सर्वेष्वपि देवेषु स्वाभाविकी भक्तिर्विराजते, पर मातु सरस्वत्या आराधन बाल्यादेव विशेषत कृतवानयम् । सरस्वत्या गलदश्रुकीर्तनमेतन्मुखादस्माभि प्रायश श्रुतम् ।

महापुरुषाणा गुणाख्यानमपि भगवद्विभूतिकीर्तनमेवेति मनसि कृत्यानेन यदा कदा डा० राजेन्द्रप्रसाद श्रीमाधवश्रीहरिअणे श्रीचिन्तामणिदेशमुखादिमहाशया अपि तत्तन्नामचित्रबन्धनिर्माणेन सम्भाविता । १९५१ ई० वर्षे विहार-राज्यपालेन श्रीअणेमहाशयेन स्वनामाङ्कितमेतन्निर्मितचित्रबन्धमवलोक्य यत्पत्र प्रहित यत्प्राप्य चित्रकवयो रांचीनगरे राज्यपालमहाशयाय चित्रबन्धान् दर्शितवन्तश्च, तदिहाविकलमुद्ध्रियते—

GOVERNMENT HOUSE PATNA

*May 18, 1951*

My Dear Pandit Ramrup Pathak,

Many thanks for sending me your Sanskrit Shloka and Chitrabandh with a commentary on the same by you, which has helped me to understand it very clearly I shall preserve it as a very valuable present by a learned Pandit of Bihar It shall remind me always of the land of Sanskrit scholarship which Bihar is, and of the learned Pandits who have devoted their lives to the study of our ancient learning and literature written in Sanskrit language The facility with which they use the Sanskrit Language in writing and speech shows that it is almost a mother tongue of theirs and not any language of antiquity that has ceased to exist So long as such Pandits exist, I have the right to believe that there is a bright future for Sanskrit literature, and I shall always do my little to help its revival and recognition by the cultured classes all over India and the world That is the real international language for expression of our cultural ideas to the whole of humanity Its place cannot be taken by retaining either a foreign language like English or by promoting any native tongue like Hindi to the position of a national language You are welcome to come and see me any time at Patna up to the 28th, when I shall be leaving for

Ranchi I intend to be there for more than two months If you inform me the date of your arrival, I shall be very glad to meet you, either at Patna or at Ranchi, according to your convenience

With my best regards and Pranams to you,

I am

Yours Sincerely,

(Sd ) M S ANEY

कोल्हापुर-महाराष्ट्र-वासिना कविवरेण श्रीरामचन्द्र—श्रीखण्डेमहाशयेन चित्रकवि-श्रीरामरूपपाठक प्रति लिखित पद्यमिदमक्षरश सत्यम्—

पाण्डित्य चित्रकाव्ये सुललितरचनापाटव चित्तहारि
मर्मज्ञ प्रीतिपूर्णं रसमयहृदय भक्तिभावेन रम्यम् ।
हर्षं श्रीरामचन्द्रप्रभुगुणकथने सज्जनाना विनोदे
दृष्ट्वैतान् सद्गुणास्ते स्मरति मम मन. सुन्दर रामरूपम् ।

---

# ग्रन्थकर्तुर्निवेदनम्

भोजराजेन शक्रेण निर्मिते नन्दनोपमे ।
लोके ख्याते सरस्वत्याः कण्ठाभरण उज्ज्वले ॥१॥

कल्पवृक्षोपमाः केचित् केचिच्छ्रीखण्डसन्निभाः ।
रसालमधुराः केचित् केचिद् द्राक्षेक्षुसोदराः ॥२॥

चित्रबन्धा यथा भान्ति पद्मचक्रादिसंज्ञकाः ।
सरस्वत्याः प्रसादेन चित्रबन्धास्तथैव मे ॥३॥

सेवा गुरोः सुकृतिना प्रतिभासुबीजमभ्यासशास्त्रजलभूवरयोगरम्यम् ।
श्रीदुःखभञ्जनकवे रघुवीरसूरेर्वाग्भट्टपण्डितवरस्य च रुद्रटस्य ॥४॥

दामोदरस्य कृतिनः कविराजराजः सच्चित्रबन्धरचितां कवितां विलोक्य ।
मच्चित्रबन्धवरकौतुकगूढवृक्षः प्राप्ताङ्कुरो विविधकाण्डयुतो दलाढ्यः ॥५॥

पुष्पोचितः फलधरः क्रमशो बभूव प्रेमाख्यदिव्यलतया सुविकाशितोऽद्य ।
चित्रामृतं फलरसं रसिकाः पिबन्तु छायाश्रया भुवि भवन्तु च तापहीनाः ॥६॥

---

# सम्पादकीयम्

करुणावरुणालयस्य भगवतो विश्वनाथस्यासीमानुकम्पया चित्रकाव्यसंग्रहोऽयं प्रकाशं गच्छतीति महत् आनन्दस्य विषयः ।

कस्यांश्चिदपि प्रवृत्तेरुपयोगित्वं धनलाभस्य मात्रयैवाङ्कनीयमिति मन्वाने वर्तमानयुगे समस्ताशाऽऽकांक्षां विहाय 'स्वान्तःसुखाय' कस्यांश्चित्कलात्मकरचनारूपिसुदीर्घकालव्यापि-साधनायां निरतो जनो विरल एव दृश्यते । चित्रकविपण्डितरामरूपपाठका एतादृग्विरलसाधना-लङ्कृता महाभागाः । विद्यानुराग-विनय-सहिष्णुता-आर्जव-निःस्पृहत्व-सन्तोष-अमानित्व-मान-दत्वादयो ब्राह्मणोचिता गुणास्तत्रभवतां व्यक्तित्वे मूर्तिमन्त इवोपलभ्यन्ते । 'आशीर्वचन'-शीर्षकान्तर्गतो निम्नोद्धृत श्लोकः पण्डितवराणां यथार्थपरिचायकः—

विद्याधर्मवयोऽतिगेन तपता सूक्ष्मेक्षिका तन्वता
ह्रस्वेनापि गरीयसा प्रथयता मूर्धानमुद्धुन्वता ।
अन्तर्गर्भवसुन्धराप्रतिभटप्रज्ञासमज्ञाजुषा
बन्धाः केऽपि समुद्धृताः सुकविना वेद्या विदां वन्दिते ॥

चित्रकवेः परिचयमहं चतुर्दशवर्षपूर्वं लब्धवती । भगवद्रसिकप्रवरश्रीरूपगोस्वामि-पादैः प्रणीतानां कतिपयबन्धात्मकश्लोकानां तत्तद्रूपचित्रेषु वर्णविन्यासस्य प्रयोजने समु-पस्थितेऽहम् आचार्यपादश्रीमहादेवशास्त्रिमहोदयानुपगता । तैश्चित्रकवेः सान्निध्यं तदर्थं साधितम्, चित्रकविभिर्मम उद्देश्यं पूरितञ्च । तदनन्तरं काश्यां समायोजितासु विभिन्नकाव्य-गोष्ठीषु चित्रकवीनां दर्शनम् अनेकवारं जातम् । वर्षद्वयात्पूर्वं ग्रीष्मावकाशे भगवत्प्रेरणया चित्रकवीनां रचनानां सावधानमवलोकनस्याभिलाषः सञ्जातः । तदनुसारं ते मया गृहं आम-न्त्रिताः । तेषां चित्रबन्धावलोकनकाले वार्तालापप्रसंगे मया पृष्टं तैः स्वीयकाव्यस्य प्रकाश-नार्थं यत्नः कृतो न वेति । तैरतिसरलभावेनोक्तम् "अधुना भवत्यैवास्य प्रकाशनं क्रियेत" इति । हठाद् ब्राह्मणमुखनिःसृतस्य वचनस्यामोघता भगवतोऽभिमताऽऽसीत् । ईशप्रेरणया *तेषां चित्रबन्धानां रेखाचित्राङ्कनं 'ब्लाक'-निर्माणञ्च मया स्वीयार्थव्ययेन मासचतुष्टये साधि-*तम्, किन्तु ग्रन्थमुद्रणसम्बन्ध्यर्थव्यवस्था सुदुष्करैव प्रतिभाति स्म । अत्रान्तरे 'आकाशवाणी'-कार्यप्रसंगे दिल्लीनगरे गतवती, तत्र मोतीलाल बनारसीदास प्रकाशनसंस्थानस्य स्वामिनः श्रीसुन्दरलालजैनमहोदयाः प्रकाशनार्थं प्रार्थिताः । तैरनायासमेव प्रकाशनभारः स्वीकृतः, अहं निश्चिन्तीकृता च । तदनन्तरं बहुविधकार्यव्यापृताऽविलम्ब्य सम्पादनमुद्रणयोरसमर्था आसम् । अनुकूले काले समुपस्थिते इदानीं प्रकाशनं सम्पन्नं, पठितरामरूपपाठकानां सुचिर-कालव्यापिनी साधना फलीभूता, तैयत् स्वप्नेऽपि नो कल्पितं तत्सत्यं जातं, भगवतो 'हीनार्था-धिकसाधकः' इति नाम सार्थकं सवृत्तम् ।

ग्रन्थेऽस्मिन् पञ्चपञ्चाशच्चित्रबन्धाश्चित्रकवीनां स्वोपज्ञटीकासवलिता सगृहीताः । वाराणसेयसंस्कृतविद्यालयीयसाहित्यविभागाध्यक्षपण्डितरामकुबेरमालवीयानां सूचनामनुसृत्य कतिपयसमस्यापूर्तयोऽनुबन्धे संकलिताः । अस्मादनुबन्धात् साहित्यविद्यार्थिनां महानुपकारो

भविष्यति । चित्रकविरचितानि लघुकाव्यान्यपि पृथगनुबन्धे समाविष्टानि । तत्र 'श्रीराम-चरितम्' इतिसंज्ञककाव्यस्य संबन्धे किंचिद् वक्तव्यमस्ति । पण्डितरामरूपपाठकैर्महाकाव्य-लक्षणानुसारेणास्य रचना संकल्पिताऽऽसीत्; पञ्चशताधिकश्लोकैः सर्गसप्तकं रामविवाहपर्यन्तं रचितञ्च । केनचिज्जनेन तस्य समग्रा पाण्डुलिपि प्रकाशनार्थं नीता किन्तु तदनन्तरं काऽपि वार्ता तत्सम्बन्धे न ज्ञापिता । रामवियोगे दशरथस्यावसानमिव स्वस्यापि रामकाव्यवियोग एवेहलोकत्यागो भविष्यतीति वदन्ति गलदश्रवश्चित्रकवयः । तत्काव्यस्य कतिपयांशाः स्वीय-संग्रहे इतस्ततः प्रकीर्णेषु पत्रखण्डेषु तैः प्राप्ता, तानेव संगृह्य प्रथमानुबन्धे दत्त्वा ते यत्किंचित् तुष्टाः सन्ति । एतानि लघुकाव्यानि, तत्रापि विशेषेण रामचरितस्याल्पांशमवलोक्य सहृद-यपाठकाश्चित्रकवेः सहजकवित्वशक्ति प्रसादगुणोपेत रचनाकौशलञ्च नितरां श्लाघयिष्यन्ति, तत्र नास्ति सन्देहलेशः । तदीयं बालसुलभसारल्यमेतद्रचनासु प्रतिपदं प्रतिभाति ।

काव्ये चित्रतत्त्वस्य मीमांसा चित्रबन्धनस्येतिहासश्च साहित्यविद्यार्थिनां प्रयोजनं साधयिष्यत इति मत्वा 'चित्रकाव्यमीमांसा'-शीर्षके लेख एतद्विषयद्वयं समाविष्टम् ।

सुधीपाठकाः संपादनत्रुटिमार्जनानुग्रहं कुर्युरिति याचे ।

## कृतज्ञता-प्रकाशः

प्रस्तुतग्रन्थस्य संकलन-संपादन-मुद्रण-प्रकाशनकार्ये यैर्गुरुजनैः सहयोगिमित्रैः सुहृद्रस्य-महानुभावैश्चामूल्यसहयोगप्रदानेन अनुगृहीताऽस्मि तान् प्रति हार्दिककृतज्ञताप्रकाशस्य पवित्र-कर्तव्यनिर्वाहसहितं विरताऽस्मि दीर्घतरवचनसमारम्भात् ।

अनन्तश्रीविभूषितजगद्गुरु-शंकराचार्य-काशीसुमेरुपीठाधीश्वरस्वामिमहेश्वरानन्दसर-स्वतीपादाः (कवितार्किकचक्रवर्तिपण्डितमहादेवशास्त्रिणः)—'आशीर्वचनम्'-इतिशीर्षके चित्र-काव्यस्य विवेचनोदाहरणप्रदानार्थम् ।

वेदतत्त्वज्ञब्रह्मर्षिदेवरातमहोदयाः (गोकर्णवासिनः) 'चित्रप्रशंसा' इतिशीर्षके चित्रस्य संकेतभाषाया विवरणप्रदानार्थम् ।

श्रीसुन्दरलालजैनमहोदयाः (मोतीलाल-बनारसीदास-प्रकाशनसंस्थानस्य स्वामिनः) प्रकाशनभारग्रहणार्थम् ।

पण्डितश्रीरुद्रदेवत्रिपाठिमहोदयाः (उज्जैननिकटस्थउन्हेलनिवासिनः) चित्रकाव्यस्य इतिहाससम्बन्धि-सामग्री-संकलने साहाय्यार्थम् ।

पण्डितश्रीजगन्नाथपाठकमहोदयाः—चित्रबन्धानां हिन्दीटीकानिर्माणार्थम् ।

पण्डितश्रीरतिनाथझामहोदयाः—संपादनकार्ये योगदानार्थम् ।

पण्डितश्रीरामकुबेरमालवीयमहोदयाः—समस्यापूर्तिसंग्रहे सहयोगार्थम् ।

समादरणीयाः कविवर्याः—स्वस्वरचनाप्रदानार्थम् ।

श्रीचन्द्रभूषणतिवारीमहोदयाः (मध्यप्रदेशस्थशहडोलनिवासिनः) रामचरितमानसान्त-र्गतचित्रबन्धसम्बन्धिसूचनाप्रदानार्थम् । सूचनेयं सागर-विश्वविद्यालये प्रस्तुत-अप्रकाशित शोधप्रबन्ध-अन्तर्गता ।

पण्डितश्रीजगन्नाथमुरलीधर अहिवासीमहोदयाः—ग्रन्थानां रेखाचित्रनिर्माणव्यवस्थाया सहयोगार्थम् ।

श्रीदुर्गाप्रसादपट्टनायकमहोदया - मुखपृष्ठचित्रस्य प्रारम्भिकरूपरेखानिर्माणार्थम् ।

पण्डितश्रीगजाननशास्त्रिमुसलगाँवकरमहोदयाः—वेदे चित्रसम्बधिमन्त्राणां संन्दर्भ-सहितमनुसन्धानार्थम् ।

श्रीलक्ष्मीदासमहोदया (काशीहिन्दूविश्वविद्यालयस्यमुद्रणालयव्यवस्थापकाः)—मुद्रण-कार्ये तत्परतार्थम् ।

॥ इति शम् ॥

काशीहिन्दूविश्वविद्यालय
फाल्गुन कृष्णत्रयोदशी
(शिवरात्रि)
सोमवासर
विक्रमाब्द २०२१
१ मार्च, खिष्टाब्द १९६५

विज्ञापयित्री
**शर्मोपाह्वा प्रेमलता**
एम० ए०, शास्त्राचार्य (साहित्य)—
पीएच डी, संगीतालङ्कार—उपाधिधारिणी।
काशीहिन्दूविश्वविद्यालयस्यश्रीकलासंगीतभारत्या
संगीतशास्त्रानुसन्धाने रीडरपदस्था ।

# चित्रकाव्यमीमांसा

शर्मोपाह्वा प्रेमलता

## १· चित्रस्यानेकार्थत्वम्

"विश्वं भूतं भव्यं भुवनं चित्रम्" (महानारायणोपनिषद् १३।२)

'चित्र'पदं वैदिकवाङ्मये शताधिकवारं प्रयुक्तम्। तत्र कतिपयार्था यथा—

१· अद्भुतम्, आश्चर्यम्, विचित्रं वा—चित्रं सन्तं गुहाहितं सुवेदं कूचिदर्थिनम्।
(ऋ० सं० सातवलेकर सं० ४।७।६)

चित्रं ह यद् वा देवया उ अद्रिरूर्ध्वो विवक्ति सोममुद् युवभ्याम्। (तत्रैव ७।६८।५)

अमूरा विश्वा वृषणाविमा वां न यासु चित्रं ददृशे न यक्षम्। (तत्रैव ७।६१।५)

चित्रं तद् वो मरुतो याम चेकिते। पृश्न्या यदूधरप्यापयो दुहुः॥ (तत्रैव २।३४।१०)

चित्रोऽसीति चित्य नाम कृत्वोपतिष्ठते ये अग्नय इति। (कात्यायन श्रौ० सू० अ०
१८ चयनप्रकरणम्)

पुरुषे चित्रे साम गायति। (का० श्रौ० सू० १७।७६)

चित्रः प्रकेत उषसो महाँ अस्त्यग्ने सख्ये मा रिषामा वयं तव। (ऋ० सं० १।९४।५)

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा। (तत्रैव १।११३।१)

स चित्रचित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम्॥ (तत्रैव ६।६।७)

रयिर्न चित्रा सूरो न सन्दृगायुर्न प्राणो नित्यो न सूनुः। (ऋ० सं० १।६६।१)

२. नानाविधम्—चित्रामघा यस्य योगेऽधिजज्ञे तं वां हुवे अतिरिक्तं पिबध्यै।
(तत्रैव ८।५८।३)

वाजिनीवती सूर्यस्य योषा चित्रामघा राय ईशे वसूनाम्। (तत्रैव ७।७५।५)

उषा अदर्शि रश्मिभिर्व्यक्ता चित्रामघा विश्वमनुप्रभूता। (तत्रैव ७।७७।३)

चित्रं वयो बृहदस्मे दधातु यूयं पातु स्वस्तिभिः सदा नः। (तत्रैव ७।४५।४)

अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य। (तत्रैव १।४४।१)

त्वे इषः संदधुर्भूरिवर्पसश्चित्रोतयो वामजाताः। (तत्रैव १०।१४०।३)

३. अनेकम्—चित्रैरञ्जिभिर्वपुषे व्यञ्जते वक्षःसु रुक्माँ अधियेतिरे शुभे।
(तत्रैव १।६४।४)

४. प्रभूतम्—चित्रं रयिं यशसं धेह्यस्मे देवि मर्तेषु मानुषि श्रवस्युम्। (तत्रैव १।११३।१५)

५. उत्कृष्टम्—चित्रो वोऽस्तु यामश्चित्र ऊती सुदानवः। मरुतो अहि भानवः॥
(तत्रैव १।१७२।१)

६. दीप्तिमत्—स्वरं न पेशो विदथेष्वञ्जञ्चित्रं दिवो दुहिता भानुमश्रेत्।
(तत्रैव १।९२।५)

स्वसारः श्यावीमरुषीमजुष्रञ्चित्रमुच्छन्तीमुषसं न गावः। (तत्रैव १।७१।१)

आयः स्वर्णभानुना चित्रो विभात्यर्चिषा। (तत्रैव २।८।४)

७ नानावर्णयुक्तम् (शवलम्)—सचन्त यदुषस सूर्येण चित्रामस्य केतवो रामविन्दन् । (तत्रैव १०।१११।७)

आवहन्ति पोष्या वार्याणि चित्र केतु कृणुते चेकिताा । (तत्रैव १।११३।१५)
चित्र शिशु परितमास्यक्तून प्र मातृभ्यो अधि कनिक्रदद्गा । (तत्रैव १०।१।२)
पवमानमहिश्रवश्चित्रेभिर्यासि रश्मिभि । (तत्रैव ९।१००।८)
चित्रेभिरभ्रेरुपतिष्ठथो रव द्या वर्षयथो असुरस्य मायया । (तत्रैव ५।६३।३)

८ दर्शनीयम्—एन्द्र याहि मत्स्व चित्रेण देव राधसा । (तत्रैव ८।१।२३)
वि तद् ययुररुणयुग्भिरश्वैश्चित्र भान्त्युपसश्चन्द्ररथा । (तत्रैव ६।६५।२)
अग्नौ चायूमके यज्ज्योतिश्चित्रतरम् (मैत्रेय्युपनिषद ६।१०)

९ आलेख्यम—चित्रभित्तिरिव मिथ्यामनोरमम । (मैत्रेय्युपनिषद् ४।२)

लौकिकवाङमये 'चित्र'पदाद् (१) विविधवर्णयुक्त (शवलम्) (२) आलेख्यम् (३) अद्भुत चमत्कारजनक वा (४) उज्ज्वल भास्वर वा, (५) मधुरम्, (६) उद्वेगकरम् इत्यर्था प्रायेण गृह्यन्ते । तत्र क्रमश उदाहरणानि यथा—

(१) मृग चित्रो रजतबिन्दुभि (वाल्मीकिरामायणे ३ ३६ १८)

(२) चित्रे निवेश्य परिकल्पितसत्त्वयोगा० (माघकाव्ये २ ९) पुनरपि चित्रीकृता कान्ता (तत्रैव ६ २०)

(३) किमत्र चित्र यदि कामसूर्भू (रघुवशे ५ ३३) वाक्यमप्रतिरूप तु न चित्र स्त्रीषु (वाल्मीकिरामायणे ३ ४५ २९)

(४) चित्रधातुविचित्राद्रीनिभभग्नभुजद्रुमान् ।
जलाशयाम्छिवजलान्नलिनी सुरसेविता ॥ (श्रीमद्भागवते १ ६ १२)

(५) वक्ता चित्रकथ (शुक्रनीतिसार ३ ५६)
चित्रस्वनै पत्ररथै (श्रीमद्भागवते १ ६ १३)

(६) चित्रैर्वधोपायै (मनुस्मृतौ ९ २ ४८)

काव्यशास्त्रे द्वितीय—तृतीयार्थावेव गृह्येते । एतदतिरिक्ता कतिपया अर्था यथा—सर्पविशेष, अशोकवृक्ष, तिलक, आकाश, श्वेतकुष्ठम् इत्यादय ।

## २. काव्येऽन्यकलासु च चित्रतत्त्वम्

काव्यशास्त्रे चित्रपदस्य प्रथमप्रयोक्तारो ध्वनिकारा स्मृता । पाठकाना सौकर्यार्थं काव्ये चित्रतत्त्वप्रतिपादको प्रयासो अविकलमुद्ध्रियतेऽत्र । यथा ध्वन्यालोके—

"प्रधानगुणभावाभ्या व्यङ्ग्यस्यैव व्यवस्थिते ।
काव्ये उभे ततोऽन्यद् यत्तच्चित्रमभिधीयते ॥
चित्र शब्दार्थभेदेन द्विविध च व्यवस्थितम् ।
तत्र किञ्चिच्छब्दचित्र वाच्यचित्रमत परम् ॥

"व्यङ्ग्यस्यार्थस्य प्राधान्ये ध्वनिसहितकाव्यस्य प्रकार, गुणभावे तु गुणीभूतव्यङ्ग्यता । ततोऽन्यद् रसभावादितात्पर्यरहित व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्य च काव्य केवलवाच्य-

वाचकवैचित्र्यमात्राश्रयेणोपनिबद्धमालेख्यप्रख्यं यदाभासते तच्चित्रम्। न तन्मुख्यं काव्यम्। काव्यानुकारो ह्यसौ। तत्र किञ्चिच्छब्दचित्रं यथा दुष्करयमकादि। वाच्यचित्रं ततः शब्दचित्रादन्यद् व्यङ्ग्यार्थसंस्पर्शरहितं प्राधान्येन वाक्यार्थतया स्थितं रसादितात्पर्यरहितमुत्प्रेक्षादि।

"अथ किमिदं चित्रं नाम? यत्र न प्रतीयमानार्थसंस्पर्शः। प्रतीयमानो ह्यर्थभेदः प्राक्प्रदर्शितः। तत्र यत्र वस्त्वलङ्कारान्तरं वा व्यङ्ग्यं नास्ति स नाम चित्रस्य कल्प्यतां विषयः। यत्र तु रसादीनामविषयत्वं स काव्यप्रकारो न सम्भवत्येव यस्मादवस्तुसंस्पर्शिता काव्यस्य नोपपद्यते। वस्तु च सर्वमेव जगद्गतमवश्यं कस्यचिद् रसस्य भावस्य वाङ्गत्वं प्रतिपद्यते अन्ततो विभावत्वेन। चित्तवृत्तिविशेषा हि रसादय, न च तदस्ति वस्तु किञ्चिद् यन्न चित्तवृत्तिविशेषमुपजनयति तदनुत्पादने वा कविविषयतैव न स्यात् कविविषयश्च चित्रतया कश्चिन्निरूप्यते।

"अत्रोच्यते—सत्यं न तादृक्काव्यप्रकारोऽस्ति यत्र रसादीनामप्रतीतिः। किन्तु यदा रसभावादिविवक्षाशून्यः कविः शब्दालङ्कारमर्थालङ्कारं वोपनिबध्नाति तदा तद्विवक्षापेक्षया रसादिशून्यतार्थस्य परिकल्प्यते। विवक्षोपारूढ एव हि काव्ये शब्दानामर्थः। वाच्यसामर्थ्यवशेन च कविविवक्षाविरहेऽपि तथाविधे विषये रसादिप्रतीतिर्भवन्ती परिदुर्बला भवतीत्यनेनापि प्रकारेण नीरसत्वं परिकल्प्य चित्रविषयो व्यवस्थाप्यते। तदिदमुक्तम्—

"रसभावादिविषयविवक्षाविरहे सति।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः॥
रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा।
तदा नास्त्येव तत्काव्यं ध्वनेर्यत्र न गोचरः॥

"एतच्च चित्रं कवीनां विशृङ्खलगिरां रसादितात्पर्यमनपेक्ष्यैव काव्यप्रवृत्तिदर्शनादस्माभिः परिकल्पितम्।"

तत्र लोचनव्याख्या :—

"यमकचक्रबन्धादिचित्रतया प्रसिद्धमेव तत्तुल्यमेवार्थचित्रं मन्तव्यमिति भावः। आलेख्यप्रख्यमिति। रसादिजीवरहितं मुख्यप्रतिकृतिरूपं चेत्यर्थः।"

प्रस्तुतोद्धरणे चित्रपदादालेख्यप्रख्यत्वं मुख्यकाव्यस्य प्रतिकृतिरूपत्वं वा प्रमुखरूपेण गृहीतम्। यथाऽऽलेख्यं वस्तुनोऽनुकृतिपरं भवति, तथैव चित्रकाव्यं मुख्यकाव्यस्यानुकरणमेव रसादिजीवरहितम्। अनुकृतिस्तु निष्प्राणा एव भवतीति सुविदितमेव। दृश्यललितकलासु श्रव्यललितकलापेक्षयानुकृतितत्त्वं विशेषेण दृश्यते। तेनैवात्रालेख्यस्य सादृश्यं गृहीतम्। मम्मटाचार्येणापि काव्यस्य तृतीय—(अवर) कोटौ चित्रकाव्यस्य समावेशः प्रतिपादितः।

ननु चित्रपदेन वैचित्र्यं, कुतूहलजनकत्वं, विस्मयकरत्वं वाभिप्रेतं भवेत्। काव्येऽद्भुतरसस्य विस्मयतत्त्वस्य वा सर्वत्र व्यापकता स्वीकृता। सहृदयाह्लादजनने वैचित्र्यस्य महत्त्वमवगणयितुं न पारयति कोऽपि तत्त्वचिन्तकः। तर्हि किमिदं नाम चित्रकाव्यस्य मुख्यकाव्यपरिधिबहिष्कारः (ध्वनिकारेण यथा), अवरकोटौ स्वीकरणं वा (मम्मटेन यथा)। अत्रोच्यते, वैचित्र्ये नास्त्यरुचिः कस्यापि, किन्तु कवेर्विवक्षैव काव्यकोटिनिर्धारणे प्रमाणम्। यदि रसभावादिमनपेक्ष्य वैचित्र्यमात्रे विवक्षा स्यात् तर्हि रसभावादिव्यंजककाव्यापेक्षया हीनत्वं

दुर्निवार्यमेव। रसभावानुग्राहकं वैचित्र्यं नास्त्यनभिमतं कस्यचिदपि। वैचित्र्यमात्रस्य स्वतंत्रप्रयोगः रसभावध्वन्यनुगतप्रयोगश्च विवेक्तुं न शक्यतेऽतिसूक्ष्मदृष्टिं विना। तत्र कविविवक्षैव कविसंरम्भो वैकमात्रं प्रमाणमिति पुनरपि कथनीयम्।

चित्रकाव्ये चारुतायाः सद्भावं प्रति चित्रमीमांसाकारस्याप्पयदीक्षितस्य विशेषमिङ्गित-मत्रोल्लेखनीयम् "यदव्यङ्ग्यमपि चारु तच्चित्रम्" (चित्रमीमांसायां ग्रन्थारम्भप्रकरणे)। अव्यङ्ग्येऽपि चारुताया सर्वथा निषेधः सर्वत्र नो स्वीकरणीयः, इत्यभिप्रेतोऽर्थोऽत्र। चारुताया निषेधे काव्यलक्षणमेव चित्रेऽव्याप्तं भवेत्।

चित्रकाव्यस्य शब्दचित्र-अर्थचित्रेतिभेदद्वये किञ्चित्तारतम्यमस्तीति मत्वा जगन्नाथ-पण्डितराजेनार्थचित्रमधमकोटेरुद्धृतं, मध्यमकोटौ स्थापितञ्च। तदर्थं तेन काव्यस्य चतुष्कोटयः स्वीकृता यथा प्रथमा कोटि–ध्वनिकाव्यं, द्वितीया कोटिर्गुणीभूतव्यंग्यं, तृतीया कोटिरर्थ-चित्रं, चतुर्थाऽधमकोटिः शब्दचित्रम्। चित्रमीमांसाकारेणाप्यर्थचित्रस्य शब्दचित्राऽपेक्षया श्रेष्ठत्वमभिहितं यथा—'शब्दचित्रस्य प्रायो नीरसत्वान्नात्यन्तं तदाद्रियन्ते कवयः, न वा तत्र विचारणीयमतीवोपलभ्यत इति शब्दचित्रांशमपहायार्थचित्रमीमांसा प्रसन्नविस्तीर्णा प्रस्तूयते।' (चि० मी० १)

ध्वनिकाव्यस्य तुलनायामर्थचित्रस्य चापेक्षया शब्दचित्रस्यावरत्वमपरिहार्यं भवतु नाम, किन्तु तत्रापि चमत्कारविशेषस्य सद्भावोऽवगणनां नार्हति। ध्वनिकारानन्दवर्धनाचार्येणापि स्वीयदेवीशतके प्रभूतचित्रबन्धविन्यासः कृत इति विख्यातमेव। वर्णसाम्ये शब्दसाम्ये च संस्कृतमानवस्य स्वभाविकी रुचिर्नोच्छेदनीया। शब्दचित्रस्याधमकोटिस्वीकरणेऽपि तत्राभिरुचिरद्यापि नो निराकृता। वर्णावृत्तित आकृतिकल्पना श्रव्यस्य दृश्ये परिणतिरेव। आकृत्यात्मकचित्रबन्धाना (खड्गचक्रादीनां) मूला प्रवृत्तिः श्रव्यस्य दृश्ये न्यासरूपेव वर्तते। श्रव्यस्य दृश्येऽभिव्यक्तेश्चूडान्तनिदर्शनमस्माकं संगीते राग-ध्यानपरम्परायां विद्यते। श्रव्य-रागस्य दृश्यरूपध्यानं विवृतमस्माकं संगीतशास्त्रे। वेदपाठस्य ध्वज-जटा-माला-रथ-इत्याद्यष्ट-भेदेष्वाकृतिसूचकानि कतिपयनामानि सन्ति। अत्रापि श्रव्यवर्णविन्यासस्य क्रमभेदस्य दृश्यकल्पनैवोपजीव्या। तद्वत् संगीतस्य स्वरसंदर्भरूपिष्वलंकारेषु कतिपयनामान्याकृतिसूचकानि विद्यन्ते। यथा—वेणी–ऊर्मि–श्येन–आवर्त–आदीनि। संगीतप्रबन्धानां नामस्वपि चक्रवाल-क्रौञ्चपद-स्वस्तिक (रागकदम्बप्रबन्धभेदः)—इतीदृगाकृतिसूचकसंज्ञा उपलभ्यन्ते। तद्वदेव-च्छन्दसामपि दृश्यसूचकनामानि प्राप्यन्ते यथा—कमल-काञ्ची-किरीट-क्रौञ्चपद-चक्र-चक्रपद-इत्यादीनि।

श्रव्ये दृश्यकल्पनाया. स्वल्पविवृत्यनन्तरं विविधकलासु चित्रकाव्यस्य सदृक्प्रवृत्तेर्यै-त्किंचिद्विवरणं क्रमप्राप्तमेव। चित्रकलाया (आलेख्ये) एकस्यामाकृत्यां गूढभावेनान्याकृति-निवेशनं क्रियते। यथा – मेघपद्धतेश्चित्रे गजपद्धतेर्गूढचित्रणम्। तद्वन्मूर्तिकलायामप्य-कस्यां मूर्त्यामेकाधिकाकृतीनां गूढसन्निवेश उपलभ्यते। उत्कलप्रदेशे भुवनेश्वरनगर्यां प्रख्यातकेदारगौरीमन्दिरस्य प्राङ्गणस्थ एकस्मिंल्लघुमन्दिरे प्राच्यां जटितैका मूर्तमया दृष्टा यस्यामेकः शयानः पुरुषो भङ्गिविशेषेण दर्शनाद् वामदिशि न्यस्तशिरा दृश्यतेऽपरभङ्ग्या दर्शनेन च दक्षिणदिशि न्यस्तशिरा. प्रतीयते, पुनरप्यपरभङ्ग्या निरीक्षणेन पुरुषद्वयं प्रतिभाति।

तद्वत् वास्तुकलायां कोणार्काख्यसूर्यमन्दिरस्य रथाकृतिः प्रसिद्धैव। गीतप्रबन्धेष्वपि तत्सदृशी प्रवृत्तिः कतिपयप्रबन्धभेदानां जनयित्रीति ज्ञायते तज्ज्ञैः। उदाहरणार्थं—स्वरार्थप्रबन्धे स्वरसंज्ञानां संकेताक्षराणां स-रि-ग-म-पधनीनां तत्तद्गादात्मकस्वरूपसंश्लेषेणार्थकल्पना क्रियते। यथा—'गागरी सिर पर धरी'; 'सगरे गाम में, धाम धाम में'। कँवाडप्रबन्धे पाटाक्षरैः (वाद्यजनितध्वनिसूचकाक्षरैः) सार्थका निरर्थका च गीतरचना क्रियते, इयमेवाधुना 'त्रिवट'—इति नाम्ना ख्याता।

अत्रोपसंहारे वैदिकपरम्परायां यज्ञकर्मणि 'श्येनचिद्' इति संज्ञया ख्यातस्य क्रिया-विशेषस्य स्मरणं प्रासङ्गिकम्। तत्र श्येनाकृतेर्निष्पत्त्यै विविधेष्टकानां चयनं भङ्गिविशेषेण क्रियते। तद्वत 'कङ्कचिद्' इति चयनयागसंज्ञाऽपि विद्यते।

आगमपरम्परागतायामुपासन—पद्धत्यां मन्त्रो ज्ञानात्मकः, तन्त्रं क्रियात्मकम्, यन्त्रञ्च भावनात्मकम्। यन्त्रमाकृतिमूलकमेव, तत्रापि चित्रबन्धानां मूलं भारतीयोपासनया सह संबद्धमिति प्रतीयते।

## ३. संस्कृतसाहित्ये लक्षण-लक्ष्य-ग्रन्थेषु चित्रबन्धकाव्यस्येतिहासः

### (क) लक्षणग्रन्थाः

१. भरतमुनेर्नाट्यशास्त्रम्—नाट्यशास्त्रे 'यमकम्' इत्येक एव शब्दालंकारः प्रति-पादितः। यथा—

शब्दाभ्यासस्तु यमकं पादादिषु विकल्पितम्॥ (ना० शा० १६, ५९) -

अत्राभिनवभारती यथा—

"एवमर्थविषयलक्षणप्रसङ्गेनार्थालंकारान् प्रदर्श्य शब्दालंकारस्वरूपमाह·········। तुरर्थालंकारेभ्यो व्यतिरेकमाह। शब्दशब्देन वर्णः, पदं, तदेकदेश इति सर्वं गृह्यते। तेनानुप्रासः, लाटीयादेरनेनैवोपसंग्रहः। यमौ द्वौ समजातावुच्येते तत्प्रकृतित्वाद्यमकम्। तेनैकस्याक्षरस्य पदस्य वा द्वितीयं सदृशं निरन्तरं सान्तरं वा शोभाजनकमलंकारः। यथा मुक्ताफलस्योचित-मुक्ताफलान्तर-पद्मरागादेर्वोपाश्रयविशेषः समुचितसहासीन-सत्पुरुषमध्यपतनं वा सत्पुरुषान्तरस्य।"

सुस्पष्टविवृतिरियं विवरणान्तरं नापेक्षते। यमकस्य भरतोक्ता दश भेदाः सलक्षणा यथा—

(१) पादान्तयमकम्—चतुर्णां यत्र पादानामन्ते स्यात् सममक्षरम्।

(२) काञ्चीयमकम्—पादस्यादौ तथान्ते च यत्र स्यातां पदे समे।

(३) समुद्गयमकम्—अर्धेनैकेन यद् वृत्तं सर्वमेव समाप्यते।

(४) विक्रान्तयमकम्—एकैकं पादमुत्क्रम्य द्वौ पादौ सदृशौ यदा॥

(५) चक्रवालयमकम्—पूर्वस्यान्तेन पादस्य परस्यादिर्यदा समः॥

(६) संदष्टयमकम्—आदौ द्वे यत्र पादे तु भवेतामक्षरे समे॥

(७) पादादियमकम्—आदौ पादे तु यत्र स्यात् समावेशः समाक्षरः।

(८) आम्रेडितयमकम्—पादस्यान्त्यं पदं यत्र द्विद्विरेकमिहोच्यते ॥

(९) चतुर्व्यवसितयमकम्—सर्वे पादाः समा यत्र भवन्ति नियताक्षराः ॥

(१०) मालायमकम् -नानारूपैः स्वरैर्युक्तं यत्रैकं व्यञ्जनं भवेत् ॥

(ना० शा० १६. ५९–८६)

वर्णावृत्तिः पदैकदेशावृत्तिः पदावृत्तिरिति त्रिविधाऽऽवृत्तिरेव शब्दालंकाराणां मूलरूपा। यमकस्यैव शिथिल-गाढ-बन्धैश्चित्रबन्धाः सम्भवन्ति। भरतोक्तयमकभेदेष्वपि चक्रवाल-काञ्ची-मालेतिसंज्ञा आकृतिसूचकाः। चक्रवालयमकमेव चक्रबन्धस्य रूपे न्यस्तं परवर्ति-काले।

२. अग्निपुराणम्—अत्र यमकस्य षोडशभेदाः, चित्रबन्धानां चाष्टौ भेदा उक्ता यथा—गोमूत्रिका, अर्धभ्रमणम्, सर्वतोभद्रम्, अम्बुजम्, चक्रम्, चक्राब्जम्, दण्डः, मुरजश्चेति।

३. भामहस्य काव्यालंकारः—अस्मिन् ग्रन्थे यमकस्य पञ्चप्रकारा आदि-मध्यान्त-पादाभ्यास-आवली-समस्तपाद-इतिविशेषणयुक्ता एव स्वीकृताः। भरतोक्ता अन्य भेदा एष्वेवान्तर्भुक्ता इति प्रतिपादितम् (२ ९–१८)। प्रहेलिकाया लक्षणमुक्त्वा तस्य व्याख्या-गम्यत्वञ्च द्योतयित्वा तदुदाहरणं नोक्तवान् भामहः।

४. दण्डिनः काव्यादर्शः—यमकभेदाः सविस्तरमुक्ताः। कतिपयचित्रबन्धा अपि लक्षणोदाहरणसहिताः प्रतिपादिताः। यथा—गोमूत्रिका, अर्धभ्रमकम् सर्वतोभद्रम्। प्रहेलि-कायाः साङ्गोपाङ्गनिरूपणमुपलभ्यतेऽस्मिन् ग्रन्थे।

५. वामनस्य काव्यालंकारसूत्रवृत्तिः—अत्र यमकस्यानेकभेदा उक्ताः। शृङ्खला-परिवर्तक-चूर्ण-इति-भङ्गविशेषा यमकस्योपकारकत्वेनोपन्यस्ताः।

६. रुद्रटस्य काव्यालंकारः—यमकश्लेषनिरूपणानन्तरं चित्रबन्धप्रतिपादनं स्वतन्त्रेऽध्याये (पञ्चमे) कृतम्। तत्र चित्रबन्धस्य लक्षणं यथा—

भङ्ग्यन्तरकृततत्क्रमवर्णनिमित्तानि वस्तुरूपाणि।
साङ्कानि विचित्राणि च रच्यन्ते यत्र तच्चित्रम्॥ (५.१)

तत्रोदाहृता बन्धा यथाः—खड्ग-मुसल-धनुः-शर-शूल-शक्ति-हल-रथपद-तुरगपद-गजपद-प्रतिलोमानुलोम-अर्धभ्रम-मुरज-सर्वतोभद्र-पद्म-अनुलोम-विलोमविपर्यस्ताक्षरपाठाः। अष्टबन्ध-स्यपद्मानां महाचक्र एकत्र विन्यासो रुद्रटस्यापूर्व-कौशलव्यञ्जकः। अस्माकं चित्रकविरामहर्षैरपि महाचक्रो निबद्धः।

७. भोजराजस्य सरस्वतीकण्ठाभरणम्—समस्तलक्षणग्रन्थानां मौलिरत्नभूतोऽयं ग्रन्थश्चित्रबन्धनिरूपणप्रसङ्गे। तत्र चित्रप्रकरणे वर्ण-स्थान-स्वर-आकार-गति-बन्ध-इतिषट्-प्रकारेण विशिष्टस्य चित्रकाव्यस्य साङ्गोपाङ्गानि लक्षणोदाहरणानि सन्ति। आकृतिमूलकेषु बन्धेषु बहुविधः पद्मबन्ध, चक्र-द्विशृङ्गाटक-शरयन्त्र-व्योम-मुरज-एकाक्षरमुरज-मुरजप्रस्तार-गोमूत्रिकादयो विशेषोल्लेखनीया.।

८. मम्मटस्य काव्यप्रकाशः—यमकस्य 'अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुति' (९ ११७)—इति लक्षणमुक्त्वा मम्मटाचार्यः 'तदेतत्काव्यान्तर्गडुभूतमिति नास्य

भेदलक्षण कृतम्' इति गदित्वा यमकभेदाना साङ्गनिरूपणान्निवृत्त । तत्र चित्रबन्धस्य लक्षणं यथा—

तच्चित्र यत्र वर्णाना खड्गाद्याकृतिहेतुता ॥ (९ १२१)

खड्ग-मुरज-पद्म-सर्वतोभद्र-इति-चत्वारो भेदा उदाहृता ।

९. हेमचन्द्रस्य काव्यानुशासनम्—"स्वर-व्यञ्जन-स्थान-गति-आकार-नियम-च्युत-गढादि-चित्रम्"—इति लक्षण दत्वा प्रतिभेदमुदाहरणानि न्यस्तवान हेमचन्द्र । आकारबन्धे नास्ति विशेष कोऽपि ।

१०. राजानकरुय्यकस्य अलंकारसर्वस्वम्—"वर्णाना खड्गाद्याकृतिहेतुत्वे चित्रम् ।" (पृ० ३०) "पौनरुक्त्यप्रस्तावे स्थानविशेषश्लिष्ट-पौनरुक्त्यात्मक चित्रवचनम् । यद्यपि लिप्यक्षराणा खड्गादिसन्निवेशविशिष्टत्व तथापि श्रोत्राकाशसमवेत-वर्णात्मशब्दाभेदेन तेषां लोकेप्रतीतेर्वाचकशब्दालकारोऽयम ।" (तत्रैव) । तत्र जयरथस्य टीका यथा—"लिप्यक्षराणा श्रूयमाणता सतत्त्ववर्णशब्दाभेदप्रतिपत्त्या औपचारिकोऽय शब्दालकार इति तात्पर्यार्थ ।"

११. कविकर्णपूरस्य अलंकारकौस्तुभः

चित्र नीरसमेवाहुर्भगवद्विषय यदि । (७ २१४)
तदा किञ्चिच्च रसवद्व्यपेक्षो पर्वचर्वणम् ॥

इतिश्लोके चित्रस्य पृथङ्न निर्देश कृत्वा कतिपयबन्धानुदाहृतवान् कविकर्णपूरो यथा—प्रतिलोमानुलोमपाद-प्रतिलोमानुलोमश्लोक-सर्वतोभद्रच्छत्र-खड्ग-मुरज-पताका-गदा-पद्म-चक्र-शार्ङ्ग-बन्धा ।

१२. विश्वनाथस्य साहित्यदर्पणः—

पद्माद्याकारहेतुत्वे वर्णाना चित्रमुच्यते ॥ (१० १५)

"आदिशब्दात् खड्गमुरजचक्रगोमूत्रिकादय । अस्य च तथाविधश्रोत्राकाशसमवाय-विशेषवशेन चमत्कारविधायिनामपि वर्णाना तथाविधश्रोत्राकाशसमवायविशेषवशेन चमत्कार-विधायिवर्णैरभेदेनोपचाराच्छब्दालकारत्वम् । (अष्टदलपद्मबन्धस्योदाहरणानन्तरम्)—काव्यान्तर्गडुभूततया तु नेह प्रपञ्च्यते ।"

उद्भटेन तु काव्यालकारसारसग्रहेऽनुप्रासलाटानुप्रासादि व्यतिरिक्त कोऽपि शब्दालकारो न निरूपित इति तस्य सग्रहो न कृतोऽत्र ।

चित्रकाव्य-प्रतिपादक-प्रकीर्णलक्षणग्रन्थेषु धर्मदाससूरेर्विदग्धमुखमण्डनम् इति ग्रन्थ स्मरणीयोऽत्र । तथैवाधुनिकयुगे दामोदरमिश्रशास्त्रिप्रणीत चित्रबन्धकाव्यमपि लक्षणोदाहरण-ग्रन्थरूपेणोल्लेखनीयम् ।

उपसहारे पाणिनीयाष्टध्यायीत उद्धरणमेकमप्रासङ्गिक न भवेत् । सज्ञायाम् (३।४।४२) 'बन्धे च विभाषा' (६।३।१३) इति सूत्रद्वयस्य व्याख्याने काशिकाया क्रौञ्च-मयूरिका-अट्टालिका-हस्त-चक्र-इति-बन्धभेदा उल्लिखिता । तेनावधारयितु शक्यते यत् पाणिनिमुने कालेऽपि काव्ये चित्रबन्धाना प्रचलनमासीत ।

## (ख) लक्ष्यग्रन्थाः

वैदिकवाङ्मये शब्दचमत्कारस्य कूटत्वस्य च बीजरूपेण सद्भावोऽविरलरूपेणोपलभ्यते। कूट-प्रकारविशेष-प्रहेलिकाया उदाहरणरूपि-निम्नोद्धृतमन्त्रा विद्यन्ते।

कः स्विदेकाकी चरति क उ स्विज्जायते पुनः।
कि ँ स्विद्धिमस्य भेषजं किम्वावपनं महत् ॥४५॥
सूर्य एकाकी चरति चन्द्रमा जायते पुनः।
अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥४६॥
कि ँ स्वित् सूर्यसमञ्ज्योतिः कि ँ समुद्रसम सरः।
कि स्वित् पृथिव्यै वर्षीयः कस्य मात्रा न विद्यते ॥४७॥
ब्रह्मसूर्यसमञ्ज्योतिर्द्यौः समुद्रसम ँ सरः।
इन्द्रः पृथिव्यै वर्षीयान्गोस्तु मात्रा न विद्यते ॥४८॥
केष्वन्तः पुरुष आविवेश कान्यन्तः पुरुषे अर्पितानि।
एतद् ब्रह्मन्नुपवल्हामसि त्वा कि ँ स्विन्नः प्रतिवोचा स्यात् ॥५१॥
पञ्चस्वन्तः पुरुष आविवेश तान्यन्तः पुरुषे अर्पितानि।
एतत्त्वात्र प्रतिमन्वानो अस्मिन् मायया भवस्युत्तरो मत् ॥५२॥
का स्विदासीत् पूर्वचित्तिः कि ँ स्विदासीद् बृहद् वयः।
का स्विदासीत् पिलिप्पिला का स्विदासीत् पिशङ्गिला ॥५३॥
द्यौरासीत् पूर्वचित्तिरश्व आसीद् बृहद् वयः।
अविरासीत् पिलिप्पिला रात्रिरासीत् पिशङ्गिला ॥५४॥
(वाजसनेयिसंहिता २३।४५-४८, ५१-५४)

तद्वत्—द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥ (मुण्ड० ३।१।१)

इति मन्त्रेऽपि कूटत्वं स्पष्टमेव। अनुप्रासस्योदाहरणमपि दुर्लभं नास्ति। यथा—
सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ॥ (ऋ० सं० १०।१-६।६)

हं ँ सः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ (कठो० २.२.२)

'नमकाध्याय'—'चमकाध्याय'— (शुक्लयजुर्वेदसंहितायां यथाक्रमं-१६-१८ सङ्ख्यकौ) इति संज्ञाद्वयमप्यनुप्रासबोधकम्।

'वरुणस्योत्तम्भनमसि' (शुक्लयजुर्वेदसं० अ० ४।४०) इति मन्त्रस्य पद्मबन्धरूपे न्यासः संभवः।

आदिकविवाल्मीकिप्रणीते लौकिकवाङ्मयस्यादिमप्रबन्धे यमकानुप्रासयोर्बहुलप्रयोगो दृश्यते। तत्र सुन्दरकाण्डस्य पञ्चमसर्गे सर्वे श्लोकाः (सप्तविंशतिसङ्ख्यकाः) प्रतिचरणमन्त्यानुप्रासयुक्ताः। तेन सर्वेषामेव पद्मबन्धे न्यासो निष्पद्यते। तत्र प्रथमश्लोकद्वयं यथा—

तत स मध्यङ्गतमशुमन्त, ज्योत्स्नावितान मुहुरुद्वहन्तम् ।
ददर्श धीमान् दिवि भानुमन्त, गोष्ठे युव मत्तमिव भ्रमन्तम् ॥
लोकस्य पापानि विनाशयन्त, महोदधि चापि समेधयन्तम् ।
भूतानि सर्वाणि विराजयन्त, ददर्श शीतांशुमयाभियान्तम् ॥
कविकुलगुरुकालिदासे रघुवशमहाकाव्ये यमकस्य भेदा प्रस्तुता ।

महाकाव्ये चित्रबन्धात्मकस्य सर्गविशेषस्य प्रयोक्ता सर्वप्रथम कविर्भारविरेव वर्तते । तेन किरातार्जुनीयस्य पञ्चदशसर्गे गोमूत्रिकाबन्ध (द्वादशपद्येषु) सर्वतोभद्र (पञ्चविंशतिपद्येषु) अर्धभ्रमक (सप्तविंशतिपद्येषु) इति चित्रकाव्यभेदा सन्निविष्टा ।

भट्टिकवे रावणवधकाव्ये निम्नोद्धृताश्चित्रभेदा विशेषेणोपलभ्यन्ते ।

१ एकान्ताराख्यातम् (एकपदान्तरेणाख्यातनिवेश ) ।

२ आख्यातमाला (एकस्मिन्नेव लकार आख्याताना प्रयोग —"भ्रेमुर्ववल्गुर्ननृतुर्जजक्षु'रित्यादि)

३ आद्यन्तयमकम् ।

४ सस्कृतप्राकृतस्य सकीर्णप्रयोगा भाषावैचित्र्यबोधका । (भट्टिकाव्यस्य प्रसन्नकाण्डे भाषासमावेशाख्ये चतुर्थपरिच्छेद एतादृग्भाषासमकप्रयोगा बाहुल्येन विद्यन्ते, परिच्छेदोऽय गणनाभेदेन सेतुबन्धनाख्यत्रयोदशसर्गरूपेऽपि प्रत्यभिज्ञात ) ।

महाकविमाघेन शिशुपालवधस्यैकोनविंशसर्गे निम्नोद्धृतचित्रप्रकारा निबद्धा । तत्र कतिपयनवीनाश्चित्रबन्धा अपि सन्ति । १–एकान्तरपाद, २–एकाक्षरबन्ध ३–द्व्यक्षरबन्ध ४–सर्वतोभद्रम् ५–मुरजबन्ध ६–प्रतिलोमानुलोमबन्ध ७–गोमूत्रिकाबन्ध ८–असयोगवर्णबन्ध ९–अर्धभ्रमकम् १०–गतप्रत्यागतम् ११–गूढचतुर्थबन्ध (यत्राद्यपादत्रयादेव चतुर्थपादो निष्पद्यते) १२–अतालव्यबन्ध १३–अर्थत्रयवाचिबन्ध १४–चक्रबन्ध ।

राजानकरत्नाकरस्य हरविजयमहाकाव्ये विंशतिसर्गेषु युद्धवर्णन निबद्धम् (३१-५० तमसर्गेषु), तत्र अष्टचत्वारिंशत्सख्यक सर्गश्चित्रात्मक । शिवस्वामिन कप्फिणाभ्युदयमहाकाव्ये ६-१८ सख्यकसर्गा प्रायेण चित्रात्मका । मखकस्य श्रीकण्ठचरितेऽपि श्लिष्टप्रयोगा बाहुल्येन दृश्यन्ते ।

उपर्युदाहृतमहाकाव्येषु युद्धवर्णनप्रसग एव प्रायशश्चित्रबन्धा प्रयुक्ता । युद्धे सैनिकाना विविधसन्निवेशैर्व्यञ्जिता आकृतयस्तत्र वर्णनप्रसङ्गे चित्रबन्धकल्पनामुद्बोधयन्तीति कथयन्ति केचित् ।

महाकाव्येषु वृत्तविशेषवर्णनस्य (विशेषेण युद्धवर्णनस्य) प्रसङ्गे सर्गविशेषे चित्रबन्धाना सन्निवेश सस्कृतसाहित्ये प्रायश सर्वत्र दृश्यते । तद्व्यतिरिक्तानि चित्रबन्धात्मकानि स्वतन्त्रकाव्यान्यपि बहूनि सन्ति । तत्र कतिपयनामानि यथा—चित्रकवेश्चित्ररत्नाकर, वेङ्कटेश्वरस्य चित्रबन्धरामायणम्, कविराजसूरे राघवपाण्डवीयम्, विद्यामाधवस्य पार्वतीरुक्मिणीयम्, चिदम्बरसुमतेः राघवपाण्डवयादवीयम् (श्लेषस्य चूडान्तनिदर्शनमस्मिन्नर्थत्रयस्यैकत्र सन्निवेशात्), कृष्णमूर्त्ते कङ्कणरामायणम्, श्रीकृष्णपरब्रह्मपरतन्त्रकालस्वामिनोऽलकार-

## (ख) लक्ष्यमन्थाः

वैदिकवाङ्मये शब्दचमत्कारस्य कूटत्वस्य च बीजरूपेण सद्भावोऽविरलरूपेणोपलभ्यते। कूट-प्रकारविशेष-प्रहेलिकाया उदाहरणरूपि-निम्नोद्धृतमन्त्रा विद्यन्ते ।

क: स्विदेकाकी चरति क उ स्विज्जायते पुनः ।
किꣳ स्विद्धिमस्य भेषजङ्किवा वपनं महत् ॥४५॥
सूर्य एकाकी चरति चन्द्रमा जायते पुन. ।
अग्निर्हिमस्य भेषजं भूमि वा वपनं महत् ॥४६॥
किꣳ स्वित् सूर्यसमञ्ज्योतिः किꣳ समुद्रसमं सरः ।
किं स्वित् पृथिव्यै वर्षीयः कस्य मात्रा न विद्यते ॥४७॥
ब्रह्मसूर्यसमञ्ज्योतिर्द्यौः समुद्रसमꣳ सर ।
इन्द्रः पृथिव्यै वर्षीयान्गोस्तु मात्रा न विद्यते ॥४८॥
केष्वन्तः पुरुष आविवेश कान्यन्तः पुरुषे अर्पितानि ।
एतद् ब्रह्मन्नुपवल्हामसि त्वा किꣳ स्विन्नः प्रतिवाचा स्यात् ॥५१॥
पञ्चस्वन्तः पुरुष आविवेश तान्यन्तः पुरुषे अर्पितानि ।
एतत्त्वात्र प्रतिमन्वानो अस्मिन् मायया भवस्युत्तरो मत् ॥५२॥
का स्विदासीत् पूर्वचित्तिः किꣳ स्विदासीद् बृहद् वयः ।
का स्विदासीत् पिलिप्पिला का स्विदासीत् पशंगिला ॥५३॥
द्यौरासीत् पूर्वचित्तिरश्वे आसीद् बृहद् वयः ।
अविरासीत् पलिप्पिला रात्रिरासीत् पशंगिला ॥५४॥
(वाजसनेयिसंहिता २३।४५-४८, ५१-५४)

तद्वत्—द्वा सुपर्णाः सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥ (मुण्ड० ३।१।१)

इति मन्त्रेऽपि कूटत्व स्पष्टमेव । अनुप्रासस्योदाहरणमपि दुर्लभं नास्ति । यथा—
सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका ।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ॥ (ऋ० सं० १०।१-६।६)

हꣳ सः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ (कठो० २. २. २.)

'नमकाध्याय'—'चमकाध्याय'—(शुक्लयजुर्वेदसंहितायां यथाक्रमं-१६-१८ संख्यकौ) इति संज्ञाद्वयमप्यनुप्रासबोधकम् ।

'वरुणस्योत्तम्भनमसि' (शुक्लयजुर्वेदसं० अ० ४।४०) इति मन्त्रस्य पद्मबन्धरूपे न्यासः संभवः ।

आदिकविवाल्मीकिप्रणीते लौकिकवाङ्मयस्यादिमप्रबन्धे यमकानुप्रासयोर्बहुलप्रयोगो दृश्यते । तत्र सुन्दरकाण्डस्य पञ्चमसर्गे सर्वे श्लोकाः (सप्तविंशतिसंख्यकाः) प्रतिचरणमन्त्यानुप्रासयुक्ता । तेन सर्वेषामेव पद्मबन्धे न्यासो निष्पद्यते । तत्र प्रथमश्लोकद्वयं यथा—

तत स मध्यङ्गतमशुमन्त, ज्योत्स्नावितान मुहुरुद्वहन्तम् ।
ददर्श धीमान् दिवि भानुमन्त, गोष्ठे वृष मत्तमिव भ्रमन्तम् ॥
लोकस्य पापानि विनाशयन्त, महोदधि चापि समेधयन्तम् ।
भूतानि सर्वाणि विराजयन्त, ददर्श शीताशुमयाभियान्तम् ॥
कविकुलगुरुकालिदासे रघुवशमहाकाव्ये यमकस्य भेदा प्रस्तुता ।

महाकाव्ये चित्रबन्धात्मकस्य सर्गविशेषस्य प्रयोक्ता सर्वप्रथम कविर्भारविरेव वर्तते । तेन किरातार्जुनीयस्य पञ्चदशसर्गे गोमूत्रिकाबन्ध (द्वादशपद्येषु) सर्वतोभद्र (पञ्चविंशति-पद्येषु) अर्धभ्रमक (सप्तविंशतिपद्येषु) इति चित्रकाव्यभेदा सन्निविष्टा ।

भट्टिकवे रावणवधकाव्ये निम्नोद्धृताश्चित्रभेदा विशेषेणोपलभ्यन्ते ।

१ एकान्ताराख्यातम् (एकपदान्तरेणाख्यातनिवेश ) ।

२ आख्यातमाला (एकस्मिन्नेव लकार आख्याताना प्रयोग —"भ्रेमुर्ययवल्गुर्ननृतुर्ज-जक्षु'रित्यादि)

३ आद्यन्तयमकम् ।

४ सस्कृतप्राकृतस्य सकीर्णप्रयोगा भाषावैचित्र्यबोधका । (भट्टिकाव्यस्य प्रसन्न-काण्डे भाषासमावेशाख्ये चतुर्थपरिच्छेद एतादृग्भाषासमकप्रयोगा बाहुल्येन विद्यन्ते, परिच्छेदोऽय गणनाभेदेन सेतुबन्धनाख्यत्रयोदशसर्गरूपेऽपि प्रत्यभिज्ञात ) ।

महाकविमाघेन शिशुपालवधस्यैकोनविंशसर्गे निम्नोद्धृतचित्रप्रकारा निबद्धा । तत्र कतिपयनवीनाश्चित्रबन्धा अपि सन्ति । १–एकाक्षरपाद, २–एकाक्षरबन्ध ३–द्व्यक्षरबन्ध ४–सर्वतोभद्रम् ५–मुरजबन्ध ६–प्रतिलोमानुलोमबन्ध ७–गोमूत्रिकाबन्ध ८–असयोगवर्णबन्ध ९–अर्धभ्रमकम् १०–गतप्रत्यागतम् ११–गूढचतुर्थबन्ध (यत्राद्यपादत्रयादेव चतुर्थपादो निष्पद्यते) १२–अतालव्यबन्ध १३–अर्थत्रयवाचिबन्ध १४–चक्रबन्ध ।

राजानकरत्नाकरस्य हरविजयमहाकाव्ये विंशतिसर्गेषु युद्धवर्णन निबद्धम् (३१-५० तमसर्गेषु), तत्र अष्टचत्वारिंशत्सख्यक सर्गश्चित्रात्मक । शिवस्वामिन कप्फिणाभ्युदय-महाकाव्ये ६-१८ सख्यकसर्गा प्रायेण चित्रात्मका । मखकस्य श्रीकण्ठचरितेऽपि श्लिष्टप्रयोगा बाहुल्येन दृश्यन्ते ।

उपर्युदाहृतमहाकाव्येषु युद्धवर्णनप्रसग एव प्रायशश्चित्रबन्धा प्रयुक्ता । युद्धे सैनिकाना विविधसन्निवेशव्यञ्जिता आकृतयस्तत्र वर्णनप्रसङ्गे चित्रबन्धकल्पनामुद्बोधयन्तीति कथयन्ति केचित् ।

महाकाव्येषु वृत्तविशेषवर्णनस्य (विशेषेण युद्धवर्णनस्य) प्रसङ्गे सर्गविशेषे चित्रबन्धाना सन्निवेश सस्कृतसाहित्ये प्रायश सर्वत्र दृश्यते । तद्व्यतिरिक्तानि चित्रबन्धात्मकानि स्वतन्त्रकाव्यान्यपि बहूनि सन्ति । तत्र कतिपयनामानि यथा—चित्रकवेश्चित्ररत्नाकर, वेङ्कटेश्वरस्य चित्रबन्धरामायणम्, कविराजसूरे राघवपाण्डवीयम्, विद्यामाधवस्य पार्वती-रुक्मिणीयम्, चिदम्बरसुमतेरु राघवपाण्डवयादवीयम् (श्लेषस्य चूडान्तनिदर्शनमस्मिन्नर्थत्रय-स्यैकत्र सन्निवेशात्), कृष्णमूर्ते कङ्कणरामायणम्, श्रीकृष्णपरब्रह्मपरतन्त्रकालस्वामिनोऽलकार-

मणिहार', विश्वेश्वरस्य कवीन्द्रकर्णाभरणम् (काव्यमालागुच्छकोऽष्टम) नागराजस्य भावशतकम् (काव्यमालागुच्छश्चतुर्थ, अस्मिन् प्रहेलिका विशेषेण निबद्धा')।

स्तोत्रसाहित्ये चित्रबन्धाना विशिष्ट स्थान दृश्यते। उपासनाया यन्त्रस्य माहात्म्य सुविदितमेव। चित्रबन्धव्यञ्जिता आकृतयो यन्त्रसादृश्य बिभ्रति, तत्सादृश्यप्रभावेण हि स्तोत्रेषु चित्रबन्धान्प्रति विशेषाभिरुचिर्जातेति नास्त्यकल्पनीयम्। स्तोतव्य प्रति स्तोतु स्वाभाविकोऽनुराग, तयोर्मध्ये सामाजिकस्य भावार्थबोधस्य व्यवधानराहित्यञ्च, इत्यपि तत्र कारणत्वेन सभावयितु शक्यते। स्तोतव्ये सकलगुणसमुदायस्य सभावनोचिता वर्तत इति हेतो. स्तोतुरुद्भावनात्मिका शक्तिरबाधभावेन सचरितु प्रभवति तेन चित्रनिर्माणे सौकर्य भवतीत्यपि कारण तत्र भवितुमर्हति। चित्रबन्धात्मकेषु बहुषु स्तोत्रकाव्येषु—आनन्दवर्धनाचार्यस्य देवीशतकम्, अवतारकवेरीश्वरशतकम् (द्वेऽपि काव्यमालागुच्छकेऽष्टमे) वेङ्कटाध्वरेर्लक्ष्मीसहस्रञ्च उदाहर्तुं शक्यन्ते।

जैनस्तोत्रसाहित्ये चित्रबन्धकाव्यस्य महानुत्कर्षो जात। द्विदलकमलबन्धादारभ्य सहस्रदलकमलपर्यन्त रचना जैनाचार्ये कृता। तत्रापि श्वेताम्बरसप्रदायान्तर्भुक्ता आचार्याश्चित्रकाव्यस्य पूर्णरसिका आसन्। तत्र कतिपयस्तोत्रनामानि यथा—समन्तभद्रस्वामिनो जिनशतकस्तुतिविद्या, जयतिलकसूरेश्चतुरहारावलिचित्रस्तव। चित्रबन्धाना नवीनभेदानामुद्भावनेन जैनाचार्याणा योगदानमत्यन्तमहत्त्वपूर्णं विद्यते।

आधुनिकयुगे सभूताना चित्रकवीना नामोल्लेख उपसहारे प्रासगिक इति प्रतीयते। तत्र काशीवास्तिश्रीदुःखभजनकवि (वाग्वल्लभाख्यछन्दोग्रन्थरचयिता, तस्य चित्रबन्धा नो प्रकाशिता') श्रीरघुवीरमिश्र (श्रीलक्ष्मीश्वरोपायनकर्ता) मगधवासी श्रीदामोदरमिश्रशास्त्री (चित्रबन्धकाव्यरचयिता)—इति नामानि समादरेण स्मरणीयान्यस्मिन् प्रस्तावे।

## ४. अन्यभारतीयभाषासु चित्रबन्धपरम्परा

प्राकृत-अपभ्रश-साहित्येऽपि चित्रबन्धरचना कियन्मात्रायामुपलभ्यते। किन्त्वत्राधुनाप्रचलितभारतीयभाषाणा चित्रबन्धात्मकसाहित्यस्य विहगावलोकनमेव प्रयोजनम्। तत्र हिन्दीभाषाया विशिष्टस्थान वर्तते।

हिन्दीसाहित्येतिहासिककालविभाजने रीतिकालनाम्ना ख्याते काले चित्रबन्धरचनाया महानुत्कर्षो जात'। केशवदास-भिखारीदास-लालकवि-गोकुलनाथ-दीनदयालगिरि-इत्यादिकवियर्या अत्र विशेषणोल्लेखनीया'। तत्रापि किञ्चिदुदाहरणार्थम् आचार्यकेशवदासो दीनदयालगिरिश्चेतिकविद्वयमल भविष्यतीति मन्ये।

आचार्यकेशवदास:

(ख्रिष्टीयषोडशशताब्द्या वर्तमान)—अनेन स्वीयग्रन्थकविप्रियायां विशिष्टालकारवर्णनाख्ये पञ्चदश 'प्रभावे' यमकस्यानेकभेदा उदाहृता, यथा—आदिपद-द्वितीयतृतीयचतुर्थचरण-आद्यन्त-त्रिपदादि-द्विपदादि-पादानुपादादि-द्विपादान्त-उत्तरार्धचतुष्पादादि-आद्यन्तनिरन्तर-आद्यन्तसान्तर-इत्यादिममकानि। तदनन्तर षोडशप्रभावे चित्रकवित्वस्य अनेकभेदा उदाहृता। यथा निरोष्ठ्यरचना (ओष्ठ्यवर्णवर्जिता) अकारमात्रयुक्तवर्णे रचना

एकाक्षर–द्व्यक्षर–त्र्यक्षर–चतुरक्षरपदयुक्ता रचना (प्रतिपदं कियन्त्यक्षराणि प्रयुज्यन्त इति नियमसमाश्रिता), प्रतिपद्यं कियन्त्यक्षराणि गृह्यन्त इति नियमानुरोधेन एकाक्षरबन्धात् समारभ्य षड्विंशत्यक्षरबन्धपर्यन्तं भेदा उदाहृताः। चतुरक्षरपद्यबन्धो यथा—

बनमाली बन में मिले बनी नलिन बनमाल।
नयन मिली मन मन मिली बैन न मिली न बाल ।।

पद्येऽस्मिन् ब-ल-म-न इति अक्षरचतुष्टयमेव प्रयुक्तम्। यत्र प्रतिपदं वर्णसंख्या नियता तत्र 'सीतानाथ–सेतुनाथ–सत्यनाथ–रघुनाथ–व्रजनाथ–दीनानाथ–देवगति'—इतिसदृशी पद-रचना नियताक्षरसंख्यया भवति।

पदे पद्ये वा अक्षरनियमनादुत्पादितभेदप्रभेदानन्तरं प्रश्नोत्तरस्यानेकभेदा वर्णिताः। यथा एकानेकोत्तरं, व्यस्तसमस्तोत्तरं, व्यस्तगतागतोत्तरं, बहिर्लापिका (यत्रोत्तरं पद्यस्य बहिर्भागे वर्तते) अन्तर्लापिका (यत्रोत्तरं पद्यस्यान्तर्भाग एव समाविष्टम्), गुप्तोत्तरमित्यादयः। बहिर्लापिकोदाहरणं यथा—

"अक्षर कौन विकल्प को, जुवति बसति किहि अंग।
बलिराजा कौने छले सुरपति के परसंग। बामन जानिबौ।।"

अन्तर्लापिकोदाहरणम्—

"कौन जाति सीता सती, दई कौन कहँ तात।
कौन ग्रन्थ बरनी हरी, रामायन अवदात।।

प्रश्नोत्तरस्य भेदवर्णनानन्तरमनुलोमविलोमक्रमेणैकार्थस्य भिन्नार्थस्य च गतागतैकार्थ-गतागतभिन्नार्थ-इतिसंज्ञाभ्यां निरूपणं दृश्यते। गतागतैकार्थो यथा—

"माल बनी बलि केशवदास सदा बश केलि बनी बलमा"

गतागतभिन्नार्थोदाहरणम्—

सैन न माधव जो सर केशव रेख सुदेश सुवेश सबै।
नै नव को तँचि जौ तरुणी रचि चीर सबै निमि काल फलै।
तै न सुनी जस भीर भरी, धर धीर' ब रीति सु कौन कहै।
मैन मनी गुरु चाल चलै, शुभ सो बन में सर सीव लसै।।

विलोमक्रमेणास्यैव पद्यस्य निम्नोद्धृतं स्वरूपं भवति—

शैल बसो रस मे नव सोभ सुलय चल चारु गुनी मन मैं।
है वन कौसु तिरी बर धीर धरी भर भी सजनी सुन तैं।
लय फल कामिनि वैस रची चिर नीच तजी चित की वन नैं।
बैस सवेश सदेश खरे वस के रस जो धव मा न नसै।।

पद्यस्य चरणचतुष्टये गतागतैगार्थस्य सन्निवेशे सर्वतोभद्रबन्धो निष्पद्यते। आकृत्यात्मक-चित्रबन्धेषु केशवदासेन चक्र-कमल-पर्वत-सर्वतोमुख-हार-डमरु-बन्धाः सोदाहरणं निरूपिताः।

(प्रस्तुतविवरणं हिन्दुस्तानीएकेडेमी-इलहाबादतः प्रकाशित-पण्डितविश्वनाथमिश्रसंपा-दितकेशवग्रन्थावल्याः प्रथमखण्डाश्रितम्)

मणिहार, विश्वेश्वरस्य कवीन्द्रकर्णाभरणम् (काव्यमालागुच्छकोऽष्टमः) नागराजस्य भावशतकम् (काव्यमालागुच्छश्चतुर्थः, अस्मिन् प्रहेलिका विशेषेण निबद्धाः)।

स्तोत्रसाहित्ये चित्रबन्धानां विशिष्टं स्थानं दृश्यते। उपासनायां यन्त्रस्य माहात्म्यं सुविदितमेव। चित्रबन्धव्यञ्जिता आकृतयो यन्त्रसादृश्यं बिभ्रति, तत्सादृश्यप्रभावेण हि स्तोत्रेषु चित्रबन्धान्प्रति विशेषाभिरुचिर्जातेति नास्त्यकल्पनीयम्। स्तोतव्यं प्रति स्तोतुः स्वाभाविकोऽनुरागः, तयोर्मध्ये सामाजिकस्य भावार्थबोधस्य व्यवधानराहित्यञ्च, इत्यपि तत्र कारणत्वेन संभावयितुं शक्यते। स्तोतव्ये सकलगुणसमुदायस्य संभावनोचिता वर्तते इति हेतोः स्तोतुरुद्भावनात्मिका शक्तिरबाधभावेन संचरितुं प्रभवति तेन चित्रनिर्माणे सौकर्यं भवतीत्यपि कारणं तत्र भवितुमर्हति। चित्रबन्धात्मकेषु बहुषु स्तोत्रकाव्येषु—आनन्दवर्धनाचार्यस्य देवीशतकम्, अवतारकवेरीश्वरशतकम् (द्वेऽपि काव्यमालागुच्छकेऽष्टमे) वेङ्कटाध्वरेर्लक्ष्मीसहस्रञ्च उदाहर्तुं शक्यन्ते।

जैनस्तोत्रसाहित्ये चित्रबन्धकाव्यस्य महानुत्कर्षो जातः। द्विदलकमलबन्धादारभ्य सहस्रदलकमलपर्यन्त रचना जैनाचार्यैः कृता। तत्रापि श्वेताम्बरसंप्रदायान्तर्भुक्ता आचार्याश्चित्रकाव्यस्य पूर्णरसिका आसन्। तत्र कतिपयस्तोत्रनामानि यथा—समन्तभद्रस्वामिनो जिनशतकस्तुतिविद्या, जयतिलकसूरेश्चतुरहारावलिचित्रस्तवः। चित्रबन्धानां नवीनभेदानामुद्भावनेन जैनाचार्याणां योगदानमत्यन्तमहत्त्वपूर्णं विद्यते।

आधुनिकयुगे संभूतानां चित्रकवीनां नामोल्लेख उपसंहारे प्रासंगिक इति प्रतीयते। तत्र काशीवासिश्रीदुःखभंजनकविः (वाग्वल्लभाख्यछन्दोग्रन्थरचयिता, तस्य चित्रबन्धा नो प्रकाशिताः) श्रीरघुवीरमिश्रः (श्रीलक्ष्मीश्वरोपायनकर्ता) मगधवासी श्रीदामोदरमिश्रशास्त्री (चित्रबन्धकाव्यरचयिता)—इति नामानि समादरेण स्मरणीयान्यस्मिन् प्रस्तावे।

## ४. अन्यभारतीयभाषासु चित्रबन्धपरम्परा

प्राकृत-अपभ्रंश-साहित्येऽपि चित्रबन्धरचना कियन्मात्रायामुपलभ्यते। किन्त्वत्राधुनाप्रचलितभारतीयभाषाणां चित्रबन्धात्मकसाहित्यस्य विहंगावलोकनमेव प्रयोजनम्। तत्र हिन्दीभाषाया विशिष्टस्थानं वर्तते।

हिन्दीसाहित्येतिहासिककालविभाजने रीतिकालनाम्ना ख्याते काले चित्रबन्धरचनाया महानुत्कर्षो जातः। केशवदास-भिखारीदास-ग्वालकवि-गोकुलनाथ-दीनदयालगिरि-इत्यादिकविवर्या अत्र विशेषेणोल्लेखनीयाः। तत्रापि किञ्चिदुदाहरणार्थम् आचार्यकेशवदासो दीनदयालगिरिश्चेति द्वयमलं भविष्यतीति मन्ये।

आचार्यकेशवदासः

(ख्रिष्टीयषोडशशताब्द्यां वर्तमानः)—अनेन स्वोपग्रन्थकविप्रियायां विशिष्टालंकारवर्णनावसरे पञ्चदश 'प्रभावे' यमकस्यानेकभेदा उदाहृताः, यथा—आदिपद-द्वितीयतृतीयचतुर्थचरण-आद्यन्त-त्रिपदादि-द्विपदादि-पादानुपादादि-द्विपादान्त-उत्तरार्धचतुष्पादादि-आद्यन्तनिरन्तर-आद्यन्तान्तर-इत्यादियमकानि। तदनन्तरं षोडशप्रभावे चित्रकवित्वस्य अनेकभेदा उदाहृता। यथा निरोष्ठ्यरचना (ओष्ठ्यवर्णवर्जिता) अकारमात्रप्रयुक्तवर्णं रचना

एकाक्षर–द्व्यक्षर–त्र्यक्षर–चतुरक्षरपदयुक्ता रचना (प्रतिपदं कियन्त्यक्षराणि प्रयुज्यन्त इति नियमसमाश्रिता), प्रतिपदं कियन्त्यक्षराणि गृह्यन्त इति नियमानुरोधेन एकाक्षरबन्धात् समारभ्य षड्विंशत्यक्षरबन्धपर्यन्तं भेदा उदाहृताः। चतुरक्षरपद्यबन्धो यथा—

बनमाली बन में मिले बनी नलिन बनमाल।
नयन मिली मन मन मिली बैन न मिली न बाल॥

पद्येऽस्मिन् ब-ल-म-न इति अक्षरचतुष्टयमेव प्रयुक्तम्। यत्र प्रतिपदं वर्णसंख्या नियता तत्र 'सीतानाथ–सेतुनाथ–सत्यनाथ–रघुनाथ–व्रजनाथ–दीनानाथ–देवगति'—इतिसदृशी पद-रचना नियताक्षरसंख्यया भवति।

पदे पद्ये वा अक्षरनियमनादुत्पादितभेदप्रभेदानन्तरं प्रश्नोत्तरस्यानेकभेदा वर्णिताः। यथा एकानेकोत्तरं, व्यस्तसमस्तोत्तरं, व्यस्तगतागतोत्तरं, बहिर्लापिका (यत्रोत्तरं पद्यस्य बहिर्भागे वर्तते) अन्तर्लापिका (यत्रोत्तरं पद्यस्यान्तर्भाग एव समाविष्टम्), गुप्तोत्तरमित्यादयः। बहिर्लापिकोदाहरणं यथा—

"अक्षर कौन विकल्प को, जुवति बसति किहि अंग।
बलिराजा कौने छले सुरपति के परसंग। वामन जानिबौ॥"

अन्तर्लापिकोदाहरणम्—

"कौन जाति सीता सती, दई कौन कहँ तात।
कौन ग्रन्थ बरनी हरी, रामायन अवदात॥

प्रश्नोत्तरस्य भेदवर्णनानन्तरमनुलोमविलोमक्रमेणैकार्थस्य भिन्नार्थस्य च गतागतैकार्थ-गतागतभिन्नार्थ-इतिसंज्ञान्यां निरूपणं दृश्यते। गतागतैकार्थो यथा—

"माल बनी बलि केशवदास सदा बश केलि बनी बलमा"

गतागतभिन्नार्थोदाहरणम्—

सैन न मायव जो सर केशव रेख सुदेश सुवेश सबै।
मैं नव की तचि जी तरुणी रुचि चीर सबै निमि काल फलै।
सै न सुनी जस भीर भरी, धर धीर ब रीति सु कौन कहै।
मैंन मनी गुण चाल चलै, शुभ सो बन में सर सौव लसै॥

विलोमक्रमेणास्यैव पद्यस्य निम्नोद्धृतं स्वरूपं भवति—

शैल यसी रस मे नव सोभ सुलय चल चारु गुनी मन मै।
हैं वन कौसु तिरो बर धीर धरी भर भी सजनी सुन सै।
लय फल कामिनि बैस रचो चिरु नीरु तजो चित को वन नै।
यैस सवेश सदेश खरे बस के रस जो यव भान नसै॥

पद्यस्य चरणचतुष्टये गतागतैकार्यस्य सन्निवेशे सर्वतोभद्रबन्धो निष्पद्यते। आकृत्यात्मक-चित्रबन्धेषु केशवदासेन चक्र-कमल-पर्वत-सर्वतोमुख-हार-डमरु-बन्धाः सोदाहरणं निरूपिताः।

(प्रस्तुतविवरणं हिन्दुस्तानीएकेडेमी-इलाहाबादतः प्रकाशित-पण्डितविश्वनाथमिश्रसंपा-दितकेशवग्रन्थावल्याः प्रथमखण्डाश्रितम्)

दीनदयालगिरिः

वर्षशताधिककालात्पूर्वं वर्तमान प्रभूतप्रतिभाशाली काशीवासी कविरयं शब्दचित्रेऽर्थं-चित्रे रसवत्काव्ये च सिद्धहस्त आसीत्। अनेन बहुविधानि चित्रकाव्यानि रचितानि। कतिपयोदाहरणान्यत्र सहृदयानुरञ्जकानि भविष्यन्तीतिमन्वाना प्रवृत्तास्मि तदुद्धरणप्रसगे।

१—मध्याक्षरी—मूलरोलाछन्दसि मध्ये द्रुतविलम्बितनिष्पत्तिः—

गगा जय जन जननि देवि सपद तन श्री तन।
हे मजुलगति कलनि पुरातन शिव ता के गन।
कुसुम मलय तिल छिपा सुतट भावन जल पावन।
टरि भव भव भा करी सिवं तं केते भुवि जन ॥१॥
परसे दिव्य विमान काम जित वपु ते पाये।
पाप ताप बिन जना सदा शिव लोकं छाये।
सनि तपनादि दिवेस शभु श्री कुज गुरु सेवं।
शभु मुकुट उरु माल काल ससि दिवि के देवं ॥२॥

संस्कृते द्रुतविलम्बितम्—

जननि सतत मगलराशिके, कुमतिपाटनपाटवभासिके।
विपदि मामव पापविनाशिके, सपदि श कुरु श कुरु काशिके॥

२—मध्यान्तरी अन्तर्लापिका—(पद्यस्यान्तर्भाग एव प्रश्नानामुत्तरसमावेश—विस्तर-भयेन पद्य नोदाह्रियते)।

३—अनेकानेकोत्तरम्—(अनेकप्रश्नानामेकोत्तरम्) यथा—

वासर को कहं कहा ? कौन वाची औसर को ?
कहा करे बलि ? कौन अली को सिंगार है ?
वृन्द पर जाये कहा ? कौन निन्द्यभाजन है ?
पार के समान कौन प्रानिन को प्यार है ?
कौन तरु नाम ? कौन घाम पै रचे है स्याम ?
केते रवि रूप ? भूप का पै हितकार है ?
कौन दीनद्याल देव ? कौन को न कीजै सेव ?
प्रश्न ये अनेक ज्वाब दीनो एक वार है।

अत्र द्वादशप्रश्नानामेकोत्तर वारपदेन न्यस्तम्। कोशे यथा—

"वार' सूर्यादिदिवसे द्वारेऽवसरवृन्दयो।
कुले वृक्षे हरे वारो वार मद्यस्य भाजने।"

४—अर्धगतागत सर्वगतागतञ्च, ५—षोडशदलकमलबन्ध, ६—डमरुबन्ध, ७—कपाटबन्ध, ८—द्वादशदलकमलबन्ध (निरोष्ठ), ९—चत्रबन्ध, १०—फणिबन्ध, ११—प्रश्नोत्तराणामनेकप्रकारा, १२—सिंहावलोकन (पद्यस्य प्रत्येकचरणान्त्यस्य पदस्य पदान्तरस्य वा परचरणादौ सन्निवेश), १३—काकावलोकनम् (अन्त्यानुप्रासविशेष), १४—बहुविषयमयम्, १५—एकस्वरबन्ध, १६—लघ्वक्षरबन्ध, १७—मुद्रालङ्कार

(नामविशेषमुद्रया श्लिष्टार्थसाधनम् । रामपरिकराणां, विशिष्टग्रन्थानां, छन्दसां, पुष्पाणां, सप्तवासराणां मुद्रया रचितं पद्यपञ्चकम्)। तत्र सिंहावलोकनस्य विशिष्टग्रन्थमुद्रायाश्चोदाहरणं यथा—

सिंहावलोकनम्—

धाई है कुमति तव विषै विष काँटनि में,
हरि को न छन भर चरचा चलाई है।
लाई है न प्रीति कहूँ सन्तन के संग जाय,
कबहुँ न काहू संग करी तू निकाई है।
काई है मलीन मन छाई अति दीनद्याल,
ताकी नहीं करे कूर रंचक उपाई है।
पाई है न कछू सब उमर गंवाई अजौ,
आई नहीं लाज सुने जम की बधाई है॥

मुद्रालंकारः—

ध्याय रघुवंश के कुमार को विहंग मन,
कामादिक हैं किरात ताहि जाल क्यों फँसे।
ऐसी बिस्वमोहिनी प्रभा लखी न मेदिनी मैं,
देखत अमर जाहि प्रेमरस में रसैं।
जासु मुखचन्द की सुकौमुदी मनोरमा में,
चित्त चन्दसेखर हूँ को चकोर सो बसै।
तासु अब दीनद्याल नाम लै शिरोमणि कै,
यहो तत्त्वसार माँहि मुकतावली लसैं॥

(नागरीप्रचारिणीसभातः १९१९तमे खिष्टाब्दे प्रकाशित-श्यामसुन्दरदाससंपादित-दीनदयालगिरिग्रन्थावलीतः संगृहीतं विवरणमिदम्) ।

भक्तप्रवरतुलसीदासाः—

एभिश्चित्रबन्धनिर्माणे अभिनिवेशपूर्वकं संरम्भो न कृतः किन्तु सिद्धकवीनामेषां गिरोऽनायासमेव नानाविधैश्चित्रैश्चित्रिता दृश्यन्ते। शहडोलनिवासिपण्डितचन्द्रभूषणतिवारि-महोदयैः रामचरितमानसे छत्र-खड्ग-नाल-सनालपद्म-त्रिशूल-नाग-मयूर-किरीट-अश्वगतिबन्धा अन्वेषणपूर्वकं प्रकटीकृताः। उदाहरणार्थं—'नमामि भक्तवत्सलं कृपालुशीलकोमलं, भजामि ते पदाम्बुजं, अकामिनां स्वधामदं'—इतिपद्यमश्वगतिबन्धे सुष्ठु न्यस्तं यथा—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| म[१] | पा[१०] | मि[३] | शी[१२] | वत[५] | को[१४] | स[७] | लं[१६] |
| भ[१७] | का[२६] | मि[१९] | नां[२८] | प[२१] | धा[३०] | मु[२३] | दं[३२] |
| कृ[९] | मा[२] | लु[११] | भ[४] | ल[१३] | य[६] | म[१५] | लं[८] |
| अ[२५] | जा[१८] | मि[२७] | ते[२०] | स्व[२९] | दां[२२] | म[३१] | जं[२४] |

छत्रबन्धे 'आगे चले बहुरि रघुराया रिष्यमूकपर्यंत नियराया' इति पद्यांशो न्यस्तो यथा –

या
या रा या
या रा घु रा या
या रा घु र घु रा या
या रा घु र रि र घु रा या
या रा घु र रि हु रि र घु रा या
या रा घु र रि हु ब हु रि र घु रा या
या रा घु र रि हु ब ले ब हु रि र घु रा या
या रा घु र रि हु ब ले च ले ब हु रि र घु रा या
या रा घु र रि हु ब ले च गे च ले ब हु रि र घु रा या
या रा घु र रि हु ब ले च गे आ गे च ले ब हु रि र घु रा या
रि
ष्य
मू
क
प
र्यं
त
नि
य
रा
या

उदाहरणद्वयेऽस्मिन् न्यास-वैशिष्ट्यमेव, न तु वर्णावृत्तिवैशिष्ट्यम् ।

हिन्दीभाषायां चित्रबन्धनिर्माणस्याल्पपरिचयानन्तरमन्यभारतीयभाषासु तथाविध-साहित्यसद्भावस्योल्लेखमात्रं प्रयोजनसाधकं भविष्यति ।

गुर्जरभाषा—श्रीदलपति–मनसुखभाई–खबरदार–प्रभृतयः कतिपयजैनाचार्याश्च चित्र-काव्यनिर्मातारस्तत्साहित्ये प्रमुखरूपेणोल्लेखनीयाः ।

महाराष्ट्रभाषा—अस्यां चित्रकाव्यस्यारम्भो रुक्मिणीस्वयंवराख्यकाव्यस्य निर्मातुः श्रीविट्ठलकवितो मन्यते । कविमोरोपन्तः (मयूरपन्तः) अम्लानमालाबन्ध–मन्त्ररामायण–किन्तुरामायण–परन्तुरामायणादि काव्यानि निर्मितवान् । श्रीपालन्देमहाशयेन सैरन्ध्रीनाटके कतिपया आकृतिबन्धा दत्ताः । 'षण्मासींचा वायदा' संज्ञकपुस्तके कूटपद्यानां प्रहेलिकानां च निरूपणं वर्तते ।

उत्कलभाषा—परमसमृद्धिमत्साहित्येऽस्मिन् उपेन्द्रभञ्ज तल्पिता च चित्रकविवरौ जातौ। एकदेवस्तुतौ विविधगतिपाठेनानेकदेवस्तुतिपरकता तयो काव्यस्य वैशिष्टयम्।

कर्णाटभाषा—सिरीभूवलयसंज्ञके ग्रन्थे समाल-वक्र-चतुष्कोण-त्रिकोण-विपरीतादिगतिभि पठनेनानेकभाषाणामनेकविषयाणा च सद्भाव उपलभ्यते। ग्रन्थोऽयं सर्वज्ञग्रन्थ इति नाम्ना ख्यात।

वङ्गभाषा—वङ्ग-नयपालदिभाषास्वपि समृद्धिमती चित्रकाव्यपरपरा प्राप्यते।

(विवरणमिद यत्किञ्चिदुदाहरणसकेतात्मकमेव, तत्र पूर्णताया लेशमात्र नास्तीतिज्ञापनाद् विज्ञपाठकैश्छिद्राणि क्षन्तव्यानि। प्रचलितभारतीयभाषासु चित्रकाव्यस्य सद्भावस्य दिग्दर्शनमेवात्र प्रयोजनम्)।

## ७. प्रस्तुतग्रन्थस्य वैशिष्ट्यम्

प्रस्तुतग्रन्थे चित्रकाव्यस्याकृतिमूलका भेदा एव निबद्धा। तत्र सर्वविलक्षणवैशिष्ट्यमिदमेव यत् प्रायेण सर्वेषु बन्धेषु आकृतेर्नाम्नोऽर्थस्य तद्बन्धात्मकपद्ये सम्यङ् निवेश कृत। यथा पद्मबन्धे पद्मस्य समानार्थपदाना, गजबन्धे गजाननस्य, वृषबन्धे नन्दिन, शिविकाबन्धे शिविकाया, कूपबन्धे कूपस्य, गदाबन्धे गदाया, मालाबन्धे मालाया, वृक्षबन्धे वृक्षस्य, दर्पणबन्धे दर्पणस्य, धनुर्बन्धे धनुष, एवमेवान्येष्वनेकेषु बन्धेषु बन्धनाम्नोऽर्थतादात्म्य बन्धपद्ये दृश्यते। अत्र चित्रकविपण्डितरामरूपाणामपूर्वकौशल सुज्ञजनै श्लाघनीयम्। चित्रबन्धाना प्रायिकी विलष्टताऽस्माक चित्रकवे प्रसादगुणवैभवे निष्प्रभा सवृत्ता। तथा च चित्रबन्धेषु लौकिकविषयान् वर्जयित्वाऽलौकिकदेवदेवीसबद्धविषयानेव गृहीतवान् पण्डितरामरूपपाठक।

आधुनिकयुगे जातस्य चित्रकविश्रीदामोदरशास्त्रिणश्चित्रबन्धकाव्यमित्याख्यो ग्रन्थ पण्डितरामरूपस्य मुख्योपजीव्य। तेन द्विश नवीना बन्धभेदा अभ्युद्भाविता यथा तिलकबन्ध, पद्मबन्धस्य प्रकारविशेष।

बन्धनाम्न पद्यार्थे ग्रहणम्, प्रसादगुणोपेतत्वेन विलष्टतापेतत्वम्, अलौकिकविषयेषु स्वारस्यम्, नवीनबन्धनिर्माणपाटवञ्च इति गुणचतुष्टय पण्डितरामरूपपाठकस्य ग्रन्थमिम संस्कृतसाहित्यस्य चित्रकाव्यभागे विशिष्टस्थानभाजन करिष्यतीत्यलमतिविस्तरेण।

संस्कृतसाहित्यस्य सर्जनात्मिका प्रतिभाऽद्यापि सपूर्णभास्वरा विराजत इति सत्यस्य निदर्शनरूपोऽय ग्रन्थ।

---

॥ श्री ॥

# अनुक्रमणिका

## क. माङ्गलिकबन्धाः

### १. श्रीबन्धः




विप्रश्रेष्ठो विश्ववन्द्यो मनोज्ञो
ज्ञो नो धाता धातृपो रामतातः ।
तामद्य प्राप्नोतु कन्यां कमान्दां
मां कस्तूरीवल्लभां कृष्ण-देवः ॥

श्रीबन्धलक्षणम्—

> श्रियो लेखक्रमेणैव चानुलोमविलोमतः ।
> श्लिष्टे गच्छेत्तु विन्दुन्तु श्रीबन्धेऽत्र कविप्रिये ॥

(चित्रबन्धकाव्यम्, पृ० ३)

कविया के प्रिय इस श्री-बन्ध में 'श्री' के लिखने के क्रम से ही अनुलोम-विलोम के अनुसार विन्दु (विसर्ग) की ओर गमन करे ।

व्याख्या—राधाजनको वृषभानुर्वदति—विप्रप्रेष्ठो विप्रातिशयाभीप्सित, विश्ववन्द्य, मनोज्ञ, ज्ञो विज्ञ, नोऽस्माक, धाता, केवलमस्माक धाता न, किन्तु धातृप, रामतातो वलदेवानुज, कृष्णदेव, ता, कमा जन्मजन्मान्तरीया सुखलक्ष्मी, दा दात्री सर्वसौभाग्यदात्री, कन्या मदीया पुत्री, कस्तूरीवल्लभा कस्तूरी वल्लभा यस्यास्ता (राधा कथयति मत्त सुन्दर कृष्णो वर्तते, कदाऽहं कृष्णसदृशी भविष्यामि) अत कस्तूरीप्रिया, उक्त च छन्दोमञ्जर्याम्—"मृगमदकृतचर्चा पीतकौशेयवासा रुचिरशिखिरखण्डा बद्धधम्मिल्लपाशा । अनृजु निहितमसे वनभुक्त्वाणयन्ती धृतमधुरिपुलोला मालिनी पातु राधा ॥" अद्य प्राप्नोतु । श्लेषेण—रामरूपपाठक कथयति—रामतातो वलदेवमिश्रानुज, कृष्णदेवो वर, कस्तूरी चासौ वल्लभा ता कस्तूरीनाम्नी प्रिया कन्या मदीयभ्रातृपुत्री कमा सुखलक्ष्मीस्वरूपा ता पूर्वजन्मवल्लभा प्राप्नोतु, शेष पूर्ववत् ।

राधा के पिता वृषभानु कहते हैं—विप्रजनों के अतिशय अभीष्ट, विश्ववन्द्य, मनाज्ञ, विज्ञ, हमारे धाता, (प्रत्युत) धाता (ब्रह्मा) की भी रक्षा करने वाले राम (बलराम) के भ्राता कृष्णदेव उस सर्वसौभाग्यदात्री मेरी कन्या राधा-स्वरूप लक्ष्मी को, जो (कृष्णसदृश हो जाने के लिए) कस्तूरी से प्रेम करती है, आज प्राप्त करें ।

दूसरा अर्थ—रामरूप पाठक कहते हैं, राम के तात अर्थात् बलदेवमिश्र के अनुज कृष्णदेव वर 'कस्तूरी' नाम की मेरे अनुज की पुत्री लक्ष्मी-स्वरूपा वल्लभा को प्राप्त करें ।



## क. माङ्गलिकवन्धाः

### १. श्रीवन्धः




विप्रश्रेष्ठो विश्ववन्द्यो मनोज्ञो
ज्ञो नो धाता धातृपो रामतातः ।
तामद्य प्राप्नोतु कन्यां कमान्दां
मां कस्तूरीवल्लभां कृष्ण-देवः ॥

श्रीबन्धलक्षणम्—

श्रियो लेखक्रमेणैव चानुलोमविलोमतः।
श्लिष्टे गच्छेत्तु बिन्दुन्तु श्रीबन्धेऽत्र कविप्रिये ॥

(चित्रबन्धकाव्यम्, पृ० ३)

कवियो के प्रिय इस श्री-बन्ध मे 'श्रीः' के लिखने के क्रम से ही अनुलोम-विलोम के अनुसार बिन्दु (विसर्ग) की ओर गमन करे।

व्याख्या—राधाजनको वृषभानुर्वदति—विप्रप्रेष्ठो विप्रातिशयाभीप्सितः, विश्ववन्द्यः, मनोज्ञ., ज्ञो विज्ञ., नोऽस्माक, धाता, केवलमस्माकं धाता न, किन्तु धातृपः, रामतातो बलदेवानुज, कृष्णदेव, तां, कमां जन्मजन्मान्तरीयां सुखलक्ष्मी, दां दात्री सर्वसौभाग्यदात्री, कन्यां मदीया पुत्री, कस्तूरीवल्लभां कस्तूरी वल्लभा यस्यास्ता (राधा कथयति मत्त. सुन्दर कृष्णो वर्तते, कदाऽहं कृष्णसदृशी भविष्यामि) अत. कस्तूरीप्रिया; उक्तं च छन्दोमञ्जर्याम्—"मृगमदकृतचर्चा पीतकौशेयवासा रुचिरशिखिखण्डा बद्धधम्मिल्लपाशा। अनृजु निहितमसे वशमुत्क्वाणयन्ती धृतमधुरिपुलीला मालिनी पातु राधा॥" अद्य प्राप्नोतु। श्लेषेण—रामरूपपाठक कथयति—रामतातो बलदेवमिश्रानुज, कृष्णदेवो वर, कस्तूरी चासौ वल्लभा ता कस्तूरीनाम्नी प्रिया कन्यां मदीयभ्रातृपुत्री कमां सुखलक्ष्मीस्वरूपा ता पूर्वजन्मवल्लभा प्राप्नोतु; शेप पूर्ववत्।

राधा के पिता वृषभानु कहते है—विप्रजनो के अतिशय अभीष्ट, विश्ववन्द्य, मनोज्ञ, विज्ञ, हमारे धाता, (प्रत्युत) धाता (ब्रह्मा) की भी रक्षा करने वाले राम (बलराम) के भ्राता कृष्णदेव उस सर्वसौभाग्यदात्री मेरी कन्या राधा-स्वरूप लक्ष्मी को, जो (कृष्णसदृश हो जाने के लिए) कस्तूरी से प्रेम करती है, आज प्राप्त करें।

दूसरा अर्थ—रामरूप पाठक कहते है, राम के तात अर्थात् बलदेवमिश्र के अनुज कृष्णदेव वर 'कस्तूरी' नाम की मेरे अनुज की पुत्री लक्ष्मी-स्वरूपा वल्लभा को प्राप्त करें।



## २. सर्वतोभद्रम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| रा | धा | सा | र | र | सा | धा | रा |
| धा | म | रा | स्व | स्व | रा | म | धा |
| सा | रा | धा | सु | सु | धा | रा | सा |
| र | स्व | सु | र | र | सु | स्व | र |
| र | स्व | सु | र | र | सु | स्व | र |
| सा | रा | धा | सु | सु | धा | रा | सा |
| धा | म | रा | स्व | स्व | रा | म | धा |
| रा | धा | सा | र | र | सा | धा | रा |

राधा सारसाधारा धामरा स्वस्वरामधा ।
साराधा(ऽ)सुसुधारासा रस्व सुर रसुस्वर ॥
रस्व सुर रसुस्वर साराधा(ऽ)सुसुधारासा ।
धामरा स्वस्वरामधा राधा सारसाधारा ॥

सर्वतोभद्रलक्षणम्—

यथाऽऽह दण्डी—'तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः' (काव्यादर्शः, ३'८०) इति। उद्धारस्तु चतुष्कोष्ठे चतुरङ्गबन्धक्रमेणाद्यपङ्क्तिचतुष्टये पादचतुष्टयं विलिख्यानन्तरपङ्क्तिचतुष्टयेऽप्यधःक्रमेण पादचतुष्टयलेखने प्रथमासु चतसृषु पङ्क्तिषु प्रथमः पादः सर्वतो वाच्यते, द्वितीयादिषु द्वितीय इत्यादि।

(स० क० चित्रप्र० रत्नेश्वरटी०)

जैसा दण्डी कहते हैं—'सब ओर से यदि भ्रमण हो तब यह सर्वतोभद्र है', उद्धार यह है कि चार कोष्ठो में चतुरङ्ग बन्ध के अनुसार पहली चार पंक्तियो में चार पादो को १, २, ३, ४ इस क्रम से लिखकर बाद की चार पंक्तियो में ४, ३, २, १ इस क्रम से चार पादो के लिखने पर चारो ओर पहली चार पंक्तियो में पहला पाद सब ओर पढा जायगा, द्वितीय आदि पंक्तियो में द्वितीय आदि पाद पढे जायेंगे।

व्याख्या—काचित्सखी वक्ति—हे स्वर बलरामघन, "रश्च रामेऽनिले वह्नौ" इत्येकाक्षरी। "स्वो ज्ञातावात्मनि स्व त्रिष्वात्मीये स्वोऽस्त्रिया धने" इत्यमर। हे सुर देव, हे रसुस्वर रात् अनिलात् सु सुष्ठु स्वरो यस्य तत्सम्बुद्धौ, वंशीसुस्वरवादक कृष्ण!, साररसाधारा साररस: शृङ्गाररस आधारो यस्या सा, धामरा धाम रातीति, स्वस्वरामधा स्वकीयधनरूपनीलवस्तुधारिणी 'बले रामा नीलचारुसिते त्रिषु" इत्यमर। साराधा आराधन आराध तेन सह वर्तते या सा, तवाराधनतत्परेति भाव। असुसुधारासा असूना प्राणाना सुधेव रासो यस्या सा, राधा इदानी वर्तते।

किसी सखी का वचन, कृष्ण के प्रति—हे बलराम रूप घन से युक्त, ह देव, ह अनिल से सुन्दर वंशी बजाने वाले कृष्ण! रसो में सारभूत शृङ्गार की आधाररूपा, धाम (अपना सन्निधान) देने वाली, अपने धन के रूप में राम (नील वस्तु-रूप तुम्हे) धारण करने वाली, तुम्हारे आराधन में तत्पर, प्राणो की सुधा की भाँति रास नृत्य स सम्पन्न वह राधा सम्प्रति विद्यमान है।



## ३. अर्द्धभ्रमकम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ध | र | वि | भू | ति | पे | भे | दे |
| र | स | सा | र | स्व | रू | प | भे |
| वि | सा | श | क्षि | र | मा | रू | पे |
| भू | र | क्षि | णि | स | र | स्व | ति |

धर विभूतिपेऽभेदे रससारस्वरूपभे ।
विसाराक्षि रमारूपे भूरक्षिणि सरस्वति ॥

अर्धभ्रमकलक्षणम्—

आहुरर्धभ्रमं नाम नाम श्लोकार्धभ्रमणं यदि ।

(दण्डी, काव्यादर्श ३ ८)

यदि श्लोकार्ध का भ्रमण हो तो 'अर्ध-भ्रम' कहते है ।

व्याख्या—हे विभूतिपे विभूति पातीति तत्सम्बुद्धौ, हे अभेदे भेदरहिते, हे रससारस्वरूपभे रससार शृङ्गाररस तस्य स्वरूप तेन भातीति तत्सम्बुद्धौ, हे विसाराक्षि मीनाक्षि, हे रमारूपे लक्ष्मीरूपे, हे भूरक्षिणि भूपालिनि, हे सरस्वति धर धारण कुरु, मामिति शेष । हे सरस्वति, पतित निरवलम्ब दु खिन ससारपङ्कलिप्त पदरहित मा रामरूप अवलम्बस्वेति भाव ।

हे ऐश्वर्य की रक्षा करने वाली, भेद से रहित, रसो में सार शृङ्गार के स्वरूप से शोभित, मत्स्य की भाँति आखो वाली, लक्ष्मीरूपे एव पृथ्वी की रक्षा करने वाली सरस्वती माता, (मेरी) रक्षा कीजिए । भाव यह कि पतित अवलम्बरहित, दु खी, ससारपङ्क में लिप्त एव पद या प्रतिष्ठा से हीन मुझ रामरूप को आप अवलम्ब दें ।



## ४. तिलकबन्धः




हरिपदं दनुजद्विपमर्दनं हरिपदं दरदं गुणदं भज ।
हरिपदं कमलार्चितमक्षरं हरिपदं कमलार्चितमक्षरम् ॥

श्लिष्टैः—हरिपदं कमलार्चितमक्षरम्
अपरं च रञ्जनम्

तिलकवन्धलक्षणम्—

मध्ये श्लिष्टं पदं ज्ञेयं पार्श्वयोश्च पदद्वयम् ।
कोणयोरक्षरं श्लिष्टं तिलकं बन्धसुन्दरम् ॥

(स्वकृतम्)

मध्य में श्लिष्ट पद, दोनो पार्श्वों में दो पद, दो कोणो में संश्लिष्ट अक्षर—इस प्रकार सुन्दर तिलकवन्ध वनता है ।

व्याख्या—दनुजद्विपमर्दनं दनुजा दैत्या एव द्विपा हस्तिन तेपा मर्दन, हरिपदं नृसिंहपद, दरद दर भय द्यति खण्डयतीति तत्, 'दो अवखण्डने'; गुणदं गुण ददातीति तत्, हरिपदं रामपद कमलार्चितं कमलैं पद्मैं पूजित, अक्षर नाशरहित, हरिपदं कृष्णपद सूर्यपद वा कमलवन्धुत्वात् कमलार्चितं लक्ष्मीपूजित अक्षरं मोक्षस्वरूप हरिपदं क्षीरसागरशायिनो विष्णो पद त्व भज सेवस्व ।

श्लिष्टं—'हरिपदं कमलार्चितमक्षरम्'

अपरञ्च—'रञ्जनम्'

["यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ।
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ।।" इत्यमर]

दत्य हिरण्यकशिपु रूपी हस्ती का मर्दन करने वाले नरसिंह भगवान् के पद को, भय नाश करने वाले, गुण देने वाले हरि (राम) के पद को, कमलो से अर्चित अक्षर (नाशरहित) हरि (कृष्ण) के पद को (या कमल के बन्धु होने से सूर्य के पदको) तथा कमला (लक्ष्मी) द्वारा अर्चित अक्षर (मोक्ष स्वरूप) हरि (क्षीरसमुद्रशायी विष्णु) के पद को भजो ।

५. मुरजबन्धः




शारदा सर्वदा(ऽऽ)नन्दा वरदानपदानया ।
यानदा पददा सत्या मानदा सर्वदा सताम् ॥

मुरजबन्धलक्षणम्—

अत्र पादचतुष्केऽपि क्रमशः परिलेखिते।
श्लोकपादक्रमेण स्याद् रेखासु मुरजत्रयी॥
(सर० क०, चित्रप्र०)

चारो पादो को सीधे क्रम से लिखने पर श्लोक के क्रमिक पादो से रेखा (रज्जु) के क्रम से तीन मुरज (मृदङ्ग) की रचना हो जाती है।

व्याख्या—सता सज्जनाना, सर्वदा सर्वस्मिन् काले आनन्दा आनन्दस्वरूपा, वरदान-पदानया वरदानपदे आ समन्तात् नयो यस्या सा, यानदा रथादिवाहनदा, पददा उच्चपददात्री सत्या सत्यस्वरूपा, मानदा सम्मानदा, सर्वदा सर्वं ददातीति, शारदा सरस्वती वर्तते। पक्षे—असता दुष्टाना, सर्वदा सर्वकाले, अनन्दा, वरदानपदानया वरदानपदे अनया, यानदा यान द्यतीति, पददा पदखण्डिनी, असत्या, मानदा मानखण्डिनी, सर्वदा सर्वनाशिनी, शारदा वर्तते।

सज्जनो के लिए सब काल में आनन्दस्वरूपा, वरदान के पद में पूर्णतया काम करने वाली, रथादि यान देने वाली, ऊँचे पद देने वाली, सत्यस्वरूपा, मान देने वाली तथा सब कुछ देने वाली शारदा (सरस्वती) है। (द्वितीय पक्ष में) असज्जनो के लिए सब समय में सुख न देनेवाली, उन्हें वर देने में न्याय न करने वाली, उनके यान को, पद को तथा सब कुछ को खण्डित करने वाली, उनके लिए असत्य-स्वरूपा सरस्वती है।



## ६. मुरजप्रस्तारः



माता सीरविभालाता रासज्ञा पतिभासिनी ।
मदावामा रमायावा सदया सहसानना ॥
सदाज्ञा रविभायाना मासवाह्वसहमा सिता ।
सीता रामदयामाप नीलाभातिरसा नवा ॥
श्लिष्टं :—रमापति

मुरजप्रस्तारलक्षणम्—

क्रमेणैवास्य पादेषु प्रस्तुतेषु चतुर्ष्वपि ।
तुर्यान् मुरजमार्गेण श्लोकोऽयमुपजायते ॥

(सरस्व० क०, चित्रप्र०)

क्रम से चारो पादो का प्रस्तार कर देने पर, चौथे (पाद) से मुरज मार्ग द्वारा पढने पर (उन्ही चार चरणो में से) अन्य श्लोक बन जाता है ।

व्याख्या—(युग्मकम्) माता, सीरविभालाता सीरस्य हलस्य यज्ञे सुवर्णहलस्येति यावत् विभा अलातो यस्या सा, रासज्ञा रास जानातीति, पतिभासिनी पतिशोभिनी, मदावामा मदेन आ समन्तात् वामा मनोहरा, रमायावा रमाया याव इव यावो यावका यस्या सा, सदया दयायुक्ता, सहसानना सस्मितमुखी ।

सदाज्ञा सत्सु आज्ञा यस्या सा, रविभायाना रविभावद् यान रथो यस्या सा मासवा माया लक्ष्म्या सव इव सवो यज्ञो यस्या सा, असहमा सहन मह न सह असह असहो म सूर्यो यस्या सा, "म सूर्य" इत्येकाक्षरी । 'असूर्यम्पश्या राजदारा ।' सिता श्वेताऽपि नीलाभा पतिभासया, अतिरसा अतिप्रेमवती, नवा नवीना, सीता रामदया रामस्य दया, आप प्राप्तवती ।

श्लिष्टं —'रमापति' । अविभक्तिकत्वमप्यदोष ।

माता, सुवर्ण हल के यज्ञ में कान्ति रूप अलात वाली, रास जानने वाली, पति से भासित रहने वाली, मद के कारण पूर्णतया मनोहर, लक्ष्मी के यावक की भाँति यावक (लाक्षारस) से युक्त, दयायुक्त एव सस्मित मुख वाली, सज्जनो में पालित आज्ञा वाली, सूर्य की कान्ति की भाँति रथ वाली, लक्ष्मी के यज्ञ की भाँति यज्ञ वाली, सूर्य को सहन न करने वाली (असूर्यम्पश्या), सित वर्ण वाली होकर भी (पति के वर्ण से) नील कान्ति-वाली, अधिक रसवाली, नवीना सीता ने राम की दया प्राप्त की ।

७. मुरजप्रस्तारः



श्रीधवे रामदेवे कवे विद्येश हि कंठर ।
धन्याश्वे दे तपाजेर मानसेश्वर तादन ॥
मान्याद्ये रामकञ्जेन श्रीविश्वेश्वर पाठक ।
वेधवेधन सेदेश रवे देहि ततादरम् ॥

पूर्वोक्त एव मुरजप्रस्तारक्रमोऽत्रानुसरणीयः ।

व्याख्या—श्री दशरथ कथयति रामरूपपाठको वा—हे कवे कवयित, हे विद्येश विद्यापते, हे कण्ठर कण्ठे र रामो यस्य स तत्सम्बुद्धौ, 'रश्च रामेऽनिले वह्नौ' इत्येकाक्षरी । हे अतप तापरहित, हे अज पित, हे ईर ऐ कामस्य इरा इव इरा यस्य स ईर तत्सम्बुद्धौ कामसदृशवाग् इत्यर्थ । "इकार उच्यते कामो लक्ष्मीरीकार उच्यते" इत्येकाक्षरी । हे मानसेश्वर मानससरोवरेश्वर, हे तादन तश्चौरोऽदन भक्षण यस्य स तत्सम्बुद्धौ, "तकार कीर्तितश्चौरे" इत्येकाक्षरी । हे रामकञ्जेन रामकलस्य इन सूर्य तत्सम्बुद्धौ रामकमल-विकासक "इन सूर्ये प्रभौ" इत्यमर । हे श्रीविश्वेश्वरपाठक मत्पित, अथवा हे विश्वनाथ हे पाठक सर्वाध्यापक, हे वेधवेधन वेधाना पीडनाना वेधन छेदनकर्त, हे सेद स कोप इ काम तौ द्यति खण्डयतीति तत्सम्बुद्धौ, "स कोपे", "इकार उच्यते काम" इत्येकाक्षरी । हे ईश शिव, हे रवे हे सूर्य, हे तत सर्वव्यापक, श्रीधवे श्रीपतौ, धन्याश्वे प्रशसनीयतुरङ्गे, दे दातरि, "दो दाने च दातरि" इत्येकाक्षरी । मान्याद्ये मान्याना पूज्याना आद्ये प्रथमे, रामदेवे रामचन्द्रे अथवा भ्रातु पौत्रे हि निश्चयेन आदर देहि ।

दशरथजी कहते हैं, अथवा रामरूप पाठक कहते हैं—हे कविता करने वाले, हे विद्येश, हे कण्ठ में स्थित राम वाले, हे तापरहित, हे अज पिता, हे कामसदृश वाणी वाले, हे मानस सरोवर के स्वामी, हे चौरो को समाप्त करने वाले, हे रामरूप कमल के सूर्य, हे विश्वेश्वरपाठक (मेरे पिता) हे विश्वनाथ, हे पाठक (सबके अध्यापक), हे पीडाओ को समाप्त करने वाले, हे क्रोध एव काम को नष्ट करने वाले, हे ईश, हे सूर्य, हे सर्वव्यापक, श्री के पति, प्रशसनीय अश्व वाले, दाता तथा मान्य जनो में श्रेष्ठ (प्रथम) रामदेव में, अथवा मेरे भाई के पौत्र में निश्चयपूर्वक आदर दीजिए ।

## ८. एकाक्षरमुरजबन्धः



गजाननध्याननवीननर्तनं अनन्तगानं गणनन्दिमानदम् ।
इनं गुहानन्दघनं शिवोन्नतं पञ्चाननं ज्ञाननदीननं नम ॥

एकाक्षरमुरजलक्षणम्—

श्लोकस्यैतस्य पादेषु लिखितेषु चतुर्ष्वपि।
निमृदङ्गकरीह स्याच्चतुरेकाक्षरावली॥

(सर० क०, चित्रप्र०)

इस श्लोक के चारों पादों को लिखने पर तीन मृदङ्ग बन जाते हैं, और प्रत्येक मृदङ्ग में एक ही अक्षर बार-बार आता है (जैसे कि प्रस्तुत चित्र में 'न' अक्षर से ही तीनों मृदङ्ग बनते हैं)।

व्याख्या—गजाननध्याननवीननर्तनं गजाननस्य ध्यानेन नवीन नर्तन यस्य त (पञ्चानन सिंहो गजमुखशब्दं श्रुत्वा मारणार्थं नर्तनं करोति, शिव पञ्चाननस्तु गणेशशब्दं श्रुत्वा लालनार्थं नर्तनं करोति), अनन्तगान अनन्तस्य शेषनागस्य गान यस्मिन् त, गणनन्दिमानद भूतगणनन्दिवाहनयोर्गर्जनं श्रुत्वा सन्मानद, इन स्वामिन्, गुहानन्दघनं गुहस्य शिखिवाहनस्य आनन्दघन आनन्दमेघ, शियोन्नत पार्वत्या उन्नत, ज्ञाननदीनन ज्ञानसमुद्रनेतार, पञ्चानन शिव त्व नम। गणेशबृंहिताद् हृष्ट शिवो नृत्य करोति। नृत्यतत्पर शिव दृष्ट्वा शेष स्वसहस्रमुखैर्गानं करोति। भूतगणो नन्दिवाहनश्च गर्जनं करोति।, स्वमयूरवाहनेन सार्धं षडाननो नृत्य करोति। पार्वत्यपि सर्वेभ्य पुरस्कार ददाति। स्वपरिवारैर्हृष्टैर्महानानिर शिव त्व नमस्कुर्विति सरलार्थं।

शिव को नमन करो, जो गजानन (गणेश जी) के शब्द को सुन कर नृत्य करते हैं, (जिनके नृत्य-काल में) शेष नाग गान करते हैं, जो भूतगण एव नन्दी को सम्मान देते हैं, जो स्वामी हैं, जो कार्तिकेय के आनन्द-मेघ रूप हैं, जो पार्वती रूपिणी शक्ति म उन्नत हैं, जो ज्ञान-समुद्र के नेता हैं तथा पञ्चानन (पञ्चमुख) हैं। श्लेष से—पञ्चानन अर्थात् सिंह गज की आवाज सुनकर उसे मारने के लिए नृत्य करता है, किन्तु पञ्चानन (शिव) गणेश (गज) की ध्वनि सुनकर उसके लालन के लिए नृत्य करते हैं।



## ख. आयुधबन्धाः

### ६. खड्गबन्धः



राजतां सर्वलोकश्रीर्जनाधारा रमोत्तमा।
माता सरस्वती देवी वीणापुस्तकहंसरा ॥
राकेश्वरमुखी सेविविद्यादा मधुराधरा।
राजीवनेत्राऽलङ्कारा हृदि मे प्रचुरावधिः ॥

खड्गबन्धलक्षणम्—

श्लिष्टेऽग्रतः पार्श्वतोऽपि तूर्ध्वे पार्श्वे ततः पुनः।
श्लिष्टान्मुष्ट्या अन्तभागे पुनरग्रे तु मध्यतः ॥
(चित्रबन्धकाव्यम् पृ० ४०)

आगे के श्लिष्ट में पार्श्व से चले, पुन पार्श्व से ऊपर चले, फिर श्लिष्ट से (दोनों पार्श्वों में होते हुए) मुष्टि के बाद के श्लिष्ट में (पुन दोनों पार्श्वों में होते हुए) अन्त तक पहुँचना चाहिए।

व्याख्या—खड्गबन्धेन सरस्वत्या स्तुति। सर्वलोकश्री सर्वलोकशोभा, जनाधारा स्वजनाधारा, रमोत्तमा रमेव उत्तमा अथवा रमाया उत्तमा, माता जननी, वीणापुस्तकहंसरा वीणापुस्तकहंसान् राति गृह्णातीति, रा आदाने धातो क्विप्, यद्यपि राधातुर्दानार्थक, न त्वादानार्थक, तथापि रल्योरभेदात् आदानार्थकस्य लाधातोरादानरूपोऽर्थोऽत्र ग्राह्य। राकेश्वरमुखी पूर्णचन्द्रानना, सेविविद्यादा सेवकविद्यादात्री, मधुराधरा मधुरोऽधरो यस्या सा, राजीवनेत्रालङ्कारा राजीवसदृशे नेत्रे अलङ्कारो यस्या सा, प्रचुरावधि विपुलावधि सरस्वती देवी मे मम हृदि हृदये राजताम्।

सभी लोकों की शोभा, जनों की आधाररूपा, रमा (लक्ष्मी) की भाँति उत्तम (अथवा रमा से भी उत्तम), वीणा पुस्तक तथा हंस रखने वाली, पूर्ण चन्द्र की भाँति मुख वाली, सेवक जनों को विद्या देने वाली, मधुर अधर वाली, राजीव (कमल) सदृश नेत्रों के अलङ्कार से युक्त, विपुल अवधि वाली देवी सरस्वती मेरे हृदय में विराजित हों।

## १०. मुसलबन्धः



राजन् सुस्वन आखुवश्वे देवेशो रूपवारिधिः ।
धिषणां रातु मे वेदे श्वेतरक्तो विनायकः ॥

मुसलबन्धलक्षणम्—

ऊर्ध्वादधस्ततश्चोर्ध्वे ह्यनुलोमविलोमतः ।
मध्यवर्णत्रयं ज्ञेयं बन्धेऽत्र मुसलाभिधे ॥
(चित्रबन्धकाव्यम् पृ० ३५)

इस 'मुसल' नामक बन्ध में, ऊपर से नीचे और नीचे से ऊपर तथा बीच में तीन वर्ण अनुलोम विलोम के अनुसार रहते हैं, ऐसा जानना चाहिए।

व्याख्या—गणेशस्तुति सुस्वने सुशब्दे, आखवश्वे आखुरेव अश्वस्तस्मिन् मूषिकवाहने, राजन् विराजमान। देवेश श्वेतरक्त शुण्डेन श्वेतोऽन्यावयवैं रक्तोऽ एव रूपवारिधिर्विनायको वेदे वेदविषये, मे मह्य, धिषणा बुद्धि, रातु ददातु। रा दाने।

सुन्दर शब्द करने वाले मूषक रूप अश्व (वाहन) पर शोभित होते हुए, देवों के ईश, सूंड से श्वेत एवं अन्य अङ्गों से रक्त, रूप के वारिधि गणेशजी वेद के विषय में मुझे बुद्धि दें।



## ११. धनुर्बन्धः



रावित्त तीक्ष्णदण्ड श्वत्र्याह रूपेश नायक ।
कर्मेश काशिकावासं देहि भैरव भैरवि ॥

धनुर्बन्धलक्षणम्—

अधस्तात् परितो गच्छन् द्वितीये विरमेत् पुनः।
धनुर्बन्धे क्रममिमं जानन्तु विदुषां वराः॥
(चित्रबन्धकाव्यम्, पृ० ३०)

नीचे से सब ओर चलता हुआ (प्रथम चरण के) द्वितीय (अक्षर) पर विराम प्राप्त हो, हे विद्वद्वर! धनुर्बन्ध में इस क्रम को आप जानें।

व्याख्या—काशीकालभैरवस्तुति। हे रावित्त धराख्यात, "रश्च रामेऽनिले वह्नौ भूमावपि धनेऽपिच" इत्येकाक्षरी। हे तीक्ष्णदण्ड उग्रदण्ड काश्या पापिना भैरवीयातनादायक, हे श्ववाह कुक्कुरवाहन, हे रूपेश, हे नायक काशीनायक, हे कर्मेश विधातृलिखितकर्मसुधारक, हे भैरव कालभैरव, काशिकावास देहि मह्यमिति शेषः। पूर्वोक्तविशेषणयुक्ते हे भैरवि, काशिकावास देहि।

हे पृथ्वी में विख्यात, हे काशी में पापियों को भैरवी यातना का तीक्ष्ण दण्ड देने वाले, हे कुक्कुरवाहन, हे रूपेश, हे (काशी के) नायक, हे कर्मेश (विधाता के लिखे कर्म को सुधारने वाले) हे काल-भैरव (मुझे) काशी में वास दीजिए।



## १२ शरबन्धः




राम विभ्रसद्धाधार वचो भण भमं श्रुवि ।
विभो ददस्व साकेते शरणं पंच शोभनम् ॥

शरबन्धलक्षणम्—,

मध्यतो युग्मपार्श्वेऽधः पुनः पार्श्वद्वये तथा।
अधश्चोपरि मध्याच्च तत्रैव विरमेत् सरन्॥
विद्वद्भिश्चावधेयं तु बन्धेऽत्र बाणसंज्ञके॥

(चित्रबन्धकाव्यम् पृ० ३१)

बीच से ऊपर चलकर दोनों पार्श्वों में चले, पुन नीचे के दोनों पार्श्वों में चल कर विराम करे, इस प्रकार विद्वानों को इस शर-बन्ध में समझना चाहिए।

व्याख्या—रामस्तुति। हे विप्रसदाधार, हे राम, भभ भेन भवनेन भातीति तत्, "भवने भ प्रकीर्तित" इत्येकाक्षरी। भुवि पृथिव्या वचो वचन, भण कथय हे विभो, साकेते स्वपुरेऽयोध्याया, शरण गृह, ददस्व, च पुन, ण ज्ञान, ददस्व। "णकार सूकरे ज्ञाने" इत्येकाक्षरी।

हे विप्रजनों के श्रेष्ठ आधार राम, भवन से शोभित होने वाला वचन यहा आप बोलिए, हे विभो, अपने नगर साकेत में शरण (गृह) दीजिए तथा शोभन ज्ञान भी दीजिए।



१३. त्रिशूलबन्धः




राजप्रसाद रक्षासून् सकलोक्षत्रिलोचन ।
नवनानावनश्रीप पश्रीनन्दद नन्द ८ ॥

त्रिशूलबन्धलक्षणम्—

मध्येऽधस्तादद्वे पदे च ह्यनुलोमविलोमतः ।
उपर्यधो मध्यतोऽपि चोर्ध्वान्मध्ये त्रिशूलके ॥

(चित्रबन्धकाव्यम् पृ० ३७)

त्रिशूलबन्ध में दो चरण नीचे से मध्य तक, फिर अनुलोम-विलोम के अनुसार (दोनो पार्श्वों में) ऊपर-नीचे तथा मध्य में दो बार नीचे से ऊपर अनुसरण करे।

व्याख्या—शिवस्तुति । हे राजप्रसाद राज्ञि चन्द्रेऽनुग्रहो यस्य स तत्सम्बुद्धौ, "राजा मृगाङ्के क्षत्रिये नृपे" इत्यमर । हे सकलोच्च सर्वश्रेष्ठ, हे त्रिलोचन, हे नवनानावनश्रीप नवीनबहुवनशोभारक्षक, पश्रीनन्दद कुबेरधनानन्दद, "प कुबेर समाख्यात" इत्येकाक्षरी । हे द दानिन्, "दकारोऽभ्रे कलत्रे च च्छेदे दाने च दातरि" इत्येकाक्षरी । असून् प्राणान् रक्ष, त्व नन्द सवर्धस्व विजयस्वेत्यर्थ ।

हे चन्द्र पर अनुग्रह करने वाले, हे सर्वश्रेष्ठ, हे त्रिलोचन, हे अनेक नवीन वनो की शोभा के रक्षक, हे कुबेर को श्री और आनन्द देने वाले, हे दानिन्, प्राणो की रक्षा कीजिए तथा आपकी जय हो ।



## १४. शक्तिबन्धः



रादरे देवि हे सानुभानुभाः क्रोधजित्पदम् ।
दरानयतमोहन्त्रि नानासौख्यं प्रयच्छ नः ॥

शक्तिबन्धलक्षणम्—

मध्यतोऽधस्ततो मध्ये ततश्चोपरितो भ्रमन् ।
पुनर्मध्ये समाप्तः स्याद् बन्धेऽत्र शक्तिसंज्ञके ॥

(चित्रबन्धकाव्यम् पृ० ३८)

शक्ति-बन्ध में बन्ध के मध्य से नीचे की ओर, पुन नीचे से मध्य तक ऊपर चले, फिर मध्य से ऊपर की ओर भ्रमण करते हुए मध्य में समाप्त हो।

व्याख्या—सूर्यप्रभास्तुति.। हे रादरे भूम्यादरे "रश्च रामेऽनिले वह्नौ भूमावपि घनेऽपि च" इत्येकाक्षरी। हे देवि, हे दरानयतमोहन्त्रि दरो भयमनयोऽनीतिस्तमोऽन्धकार-स्तान् हन्तीति तत्सम्बुद्धौ, हे सानुभानुभाः, उदयशिखरगतसूर्यप्रभे, क्रोधजित्पदं क्रोधजित् पद यस्मिस्तत्, नानासौख्यं नः अस्मभ्य प्रयच्छ देहि।

हे भूमि पर आदर पाने वाली, हे देवी, हे भय अनीति और अन्धकार को नष्ट करने वाली, क्रोध को जीतने वाले पद (प्रतिष्ठा) से युक्त नाना सौख्य हमें दीजिए।



रानानन्त हे नानासेनानायकसूदन ।
नन्दनन्दन हे कृष्ण पार्थरक्षक रक्ष माम् ॥

हलबन्धलक्षणम्—

मूलात्सीतस्याग्रभागे ततो मध्ये तु लग्नतः ।
ऊर्ध्वे युग्माटपार्श्वाभ्यां मध्येऽन्ते हरिशस्य च ॥
भागे परिसमाप्तिः स्याद् बन्धे त्वत्र हलाभिधे ॥

(चित्रबन्धकाव्यम्, पृ० ३३)

हल-बन्ध में मूल से सीत के अन्तभाग तक, फिर वहाँ से मध्य में, पुन मध्य में लग्न (लगना) से ऊपर जुआठ में और तब ऊपर मध्य से हरिस के अन्त में परिसमाप्ति हो जाती है ।

व्याख्या—कृष्णस्तुति । हे रानन रोऽग्निराननं मुखे यस्य स तत्सम्बुद्धौ "रश्च रामेऽनिले वह्नौ" इत्येकाक्षरी । "मुखादग्निरजायत" इति श्रुति । "पश्यामि त्वा दीप्तहुताशवक्त्र" इति गीता । हे अनन्त, हे नानासेनानायकसूदन, हे नन्दनन्दन, हे पार्थरक्षक, हे कृष्ण, त्व मा रक्ष ।

हे अग्नियुक्त मुख वाले, हे नन्दनन्दन, हे अर्जुन के रक्षक, हे कृष्ण, आप मेरी रक्षा कीजिए ।



## १६. महाचक्रबन्धः



सरस्वतीप्रसादेन श्रीविश्वेश्वरसूनुना ।
रामरूपेण चक्रोऽयमाराधि कविनन्दनः ॥

इस बन्ध में पहले दिए हुए सात आयुध-बन्धो के श्लोको का समावेश है। जो अक्षर मोटे 'टाईप' में हैं, उन से ऊपर लिखा श्लोक श्लेप से बन जाता है। अन्य सब श्लोको की व्याख्या तो उन-उन बन्धो में ही आ चुकी है, अत केवल श्लेप से निष्पन्न श्लोक की ही व्याख्या यहाँ दी जाती है। शेप श्लोक पाठको की सुविधा के लिए केवल उद्धृत कर दिये गए है।

व्याख्या— सरस्वतीप्रसादेन सरस्वत्या प्रसादोऽनुग्रहो यस्मिन् तेन, श्रीविश्वेश्वरसूनुना श्रीविश्वेश्वरपाठकस्य पुत्रेण मया रामरूपेण, कविनन्दन कविप्रियोऽयं चक्रः आराधि आराधित। राध साध् ससिद्धौ' इति धातो. कर्मणि लुङ। 'अर्द्धर्चादय क्लीबपुंसो' इति पुंस्त्वम्।

सरस्वती के अनुग्रह से युक्त, श्री विश्वेश्वर पाठक के पुत्र मुझ रामरूप ने कवियो के प्रिय इस चक्र का आराधन ( सादर निर्माण ) किया।

## महाचक्रस्थपद्यानि:—

खड्गबन्धः—

राजतां सर्वलोकश्रीर्जनाधारा रमोत्तमा, माता सरस्वती देवी वीणापुस्तकहंसरा।
राकेश्वरमुखी सेविविद्यादा मधुराधरा, राजीवनेत्राऽलकारा हृदि मे प्रचुरावधिः॥

मुसलबन्धः—

राजन् सुस्वन आख्वश्वे देवेशो रूपवारिधि·। धिषणा रातु मे धेवे श्वेतरक्तो विनायकः।

धनुर्बन्धः—

रावित्त तीक्ष्णदण्ड इव-बाहु रूपेश नायक। कर्मेश काशिकावासं देहि भैरव भैरवि॥

शरबन्धः—

राम विप्रसदाधार वचो भण भर्म भुवि। विभो ददस्व साकेते शरण णं च शोभनम्॥

त्रिशूलबन्धः—

राजप्रसाद रक्षासून् सकलोच्चनिलोचन। नयनानावनश्रीप पश्रीनन्दद नन्द द॥

शक्तिबन्धः—

रावरे देवि हे सानुभानुभाः क्रोधजित्पदम। दरानयतमोहन्त्रि नानासौख्य प्रयच्छ न·॥

हलबन्धः—

राननानन्त हे नानासेनानायकसूदन। नन्दनन्दन हे कृष्ण पार्थरक्षक रक्ष माम्॥

## ग. विष्ण्वायुधबन्धाः

### १७. शङ्खबन्धः



सख्याः पूजनं कर्म शङ्खं वादय सत्तम ।
घण्टां च झर्झरौ राम भरतेष्टयमौ मम ॥

शङ्खबन्धलक्षणम्—

मुखात्पादद्वयं वाच्यं पुच्छात्पादद्वयं तथा ।
मध्ये च विरताः सर्वे शङ्खबन्धे हि नूतने ॥

(चित्रबन्धकाव्यम् पृ० ७)

इस नूतन शङ्खबन्ध में मुख की ओर से दो पाद एव चरण की ओर से दो पाद पढने चाहिए, और सभी पाद मध्य में समाप्त होते हैं।

व्याख्या—सुमित्राया वचनम् । सख्याः पूजनं कर्म भवति, हे सत्तम राम, त्व शङ्खं पाञ्चजन्य, वादय, हे भरत, त्व घण्टां वादय, मम इष्टयमौ प्रियलक्ष्मणशत्रुघ्नौ झर्झरौ वादयताम् ।

सुमित्रा का वचन—सरयू का पूजन कर्म हो रहा है, हे सज्जनश्रेष्ठ राम, तुम शङ्ख (पाञ्चजन्य) बजाओ, हे भरत, तुम घण्टानाद करो, हे मेरे प्रिय लक्ष्मण और शत्रुघ्न, तुम दोनो झर्झर (झझडी) बजाओ ।



## १८. प्रथमश्चक्रबन्धः (द्वादशाक्षरश्लेषः)



सद्मा ॐ सहितेन्दुकुन्दधवला वेदेश्वरी भद्रवाग्
वन्द्या नन्दनवाहनादिधनदा ग्रीवागृहाऽगर्विता ।
गन्धान्मोहितसुस्थिरा बुधनुता श्रीयज्ञपा वश्यमा
माता त्रासहरा वरा भगवती वाग्देवता पातु माम् ॥

चक्रबन्धलक्षणम्—

पुरः पुरो लिखेत्पादानत्र त्रीन् पङ्क्तीकृतान् ।
तुर्यन्तु भ्रमयेन्नेमौ नामाङ्कश्चक्रसंविधिः ॥

(सरस्व० क० चित्रप्र०)

यहाँ प्रथम तीन पादो को छ अरो (डाडियो) में लिखे और चतुर्थ पाद को नेमि (चक्र के हाल) में घुमा दे, इस प्रकार (तीसरे और पाचवें कोष्ठ में) 'नामाङ्क' से युक्त यह 'चक्र' बनता है ।

व्याख्या—सद्भा शोभनकान्ति, ॐसहिता ॐकारस्वरूपा, इन्दुकुन्दधवला चन्द्रकुन्द-श्वेता, वेदेश्वरी वेदाधिष्ठात्री देवी, भद्रवाक् कल्याणवचना, वन्द्या वन्दनीया, नन्दनवाहनादिघ-नदा पुत्रयानादिवित्तदा, ग्रीवागृहा स्वजनकण्ठवासिनी, अगर्विता गर्वहीना, गन्धात् स्वगन्धात्, मोहितसुस्थिरा मोहिता सुरभीकृता सुस्थिरा पृथिवी यया सा, बुधनुता विद्वद्विदग्धस्तुता, श्रीयज्ञपा धनेन यज्ञसम्पादयित्री, वश्यमा वश्या मा लक्ष्मीर्यस्या सा, माता जननी, त्रासहरा भयहर्त्री, वरा श्रेष्ठा, वाग्देवता भगवती मा पातु रक्षतु ।

दिलष्टैरत्राङ्क—ॐ नमो भगवते वासुदेवाय ।

शोभन कान्ति वाली, ॐकार से युक्त, चन्द्र और कुन्द की भाति धवल, वेदो की अधिष्ठात्री, कल्याणप्रद वचन वाली, वन्दन के योग्य, पुत्र वाहन आदि वैभव अर्पित करने वाली, अपने जनो के कण्ठ में निवास करने वाली, गर्व से रहित, अपनी गन्ध से पृथ्वी को सुवासित करने वाली, विद्वानो और विदग्धो द्वारा स्तुत, धन द्वारा यज्ञो का सम्पादन करने वाली, लक्ष्मी को वश में रखने वाली, माता, भय दूर करने वाली, श्रेष्ठ, भगवती वाग्देवता (सरस्वती) मेरी रक्षा करें ।

## १६. द्वितीयश्चक्रबन्धः (चतुर्विंशत्यक्षरश्लेषः)



वन्द्या(ऽऽ)दर्शभकाय रत्नपरमा श्रीवाक् सुमेधाधरा
सुन्यायां शुभशीलदा सुपददिक्सत्संकुला निःस्वपा ।
धन्या सुन्दरनित्यनम्नपटशस्तावर्णताघे बल
लब्धमोदा वचने सुवर्णधवला राजेत्कृपापेशल ॥

चक्रबन्धलक्षणं पूर्ववदनुसर्तव्यम्। पूर्वत्र द्वादशाक्षराणि शिलष्टानि, किन्त्वत्र चतुर्विंशतिरक्षराणि श्लिष्टानि।

व्याख्या—हे आदर्शभकाय दर्पण सदृशदेह, हे सुन्दर हे नित्यनग्न सन्ततदिगम्बर, हे पटशस्त सुन्दरवस्त्रधारित्वाद् वर्णित, हे अवर्णताघे अवर्णताया अपवादताया आघे बन्धक, हे बल हे पराक्रमधारिन्, हे कृपापेशल कृपया मनोहर, वन्द्या वन्दनीया, रत्नपरमा रत्नमिव परमा, सुमेधाधरा सुबुद्धियुता, सुन्याया सुनीतिः, शुभशीलता, सुपदविक्सतसङ्कुला उच्चपदस्थसर्वदिशास्थसज्जनसेवितापि, निःस्वपा दरिद्रपालिनी, धन्या लक्ष्मीदा, सुवर्णधवला शोभनाक्षरोज्ज्वला, श्रीवाक् श्रीसरस्वती, वचने राजेत् शोभेत, ममेति शेषः।

शिलष्टं :—वसुन्धरापाल दयासुधानिधे काशीनिवासं वरदानमादिश।

हे दर्पणसदृश स्वच्छ शरीर वाले, हे सुन्दर, हे नित्य दिगम्बर, हे सुन्दर पट धारण करने से प्रशंसित, हे अपवाद को रोकने वाले, हे पराक्रम धारण करने वाले, हे कृपापेशल, वन्दनीया, रत्न की भांति श्रेष्ठ, सुन्दर मेधा को धारण करने वाली, शोभन न्याय वाली, शुभ शील को देने वाली, उच्च पदों पर रहने वाली, सभी दिशाओं में स्थित सज्जनों द्वारा सेवित (फिर भी) दरिद्रों को पालने वाली, धन्या, लक्ष्मी को देने वाली, सुवर्णों—शोभन अक्षरों से धवल, श्री वाक् (श्रीसरस्वती) मेरे वचन पर शोभित हों।

हे वसुन्धरा (पृथ्वी) का पालन करने वाले, हे दयारूपी सुधा के समुद्र, आप मुझे काशी में निवास रूप वरदान का आदेश दें।



## २०. गदाबन्धः



रामनारायण त्राहि कौमोदकीगदाधर ।
दरं हर वरस्मेर धीर वीर धुरंधर ॥

गदाबन्धलक्षणम्—

अधस्ताद् द्वे पदे मध्ये द्वे पदे परितस्तथा ।
गोमूत्रिकाक्रमेणैव गदाबन्धे हि नूतने ॥
(चित्रबन्धकाव्यम् पृ० ९)

इस नूतन गदाबन्ध में दो चरण (नीचे से ऊपर की ओर) और दो चरण मध्य में चारों ओर 'गोमूत्रिका' के क्रम से रखे जाते हैं।

व्याख्या—हे कौमोदकीगदाधर, हे राम, हे नारायण, त्राहि रक्ष, मामिति शेष, हे वरस्मेर शोभनस्मित, हे धीर, हे वीर, हे धुरन्धर, दरं भय हर नाशय।

हे कौमोदकी गदा को धारण करने वाले, हे राम, हे नारायण, मेरी रक्षा कीजिए, हे शोभन स्मित वाले, हे धीर, हे वीर, हे धुरन्धर, (मेरे) भय को दूर कीजिए।



## २१. प्रथमः पद्मबन्धः




श्रीधामन् मम मथितं मनः कुमार
कृच्छ्रं मे हर रथिनां वरेण्य कीर्णम् ।
ण्णः सिद्धं युटि पथि रुक्मिणी हि भीष्म !
शङ्कन्त्वेत्यृषिकथितं स्मरामि कर्म ॥

पद्मबन्धलक्षणम्—

अन्ते च विरताः पादाः श्लिष्टा भिन्नार्थवाचकाः।
सुगमः पद्मबन्धोऽपि प्रायशः सर्ववृत्तिषु ॥
(चित्रबन्धकाव्यम् पृ० ११)

सभी चरण अन्त में समाप्त होते हैं तथा श्लिष्ट (अक्षर) भिन्न अर्थ के वाचक होते हैं, इस प्रकार प्राय सभी वृत्तियों में पद्मबन्ध सुविधा से बन सकता है।

व्याख्या—रुक्मिणीपत्रम्। हे श्रीधामन् शोभागृह, लक्ष्मीनिवास, हे कुमार कौ पृथिव्या मार काम, मम मन मथितं, तव श्रीधामत्वेन कुमारत्वेन च। हे रथिना वरेण्य, मे मम कीर्णं व्याप्त, कृच्छ्रं कष्ट हर नाशय। (कश्चिद् ऋषिर्मम कर्मरेखा 'स्नान करिष्यति सुता हरिपादवारा' पठित्वोवाच–) 'हे भीष्म, हि निश्चयेन रुक्मिणी पथि मार्गे शं सुख ष्णः धातोर्युटि प्रत्यये कृते सति सिद्ध कर्म कर्मकारक (स्नान) श्वो गन्ता श्व प्राप्स्यति' इति ऋषिकथित कर्म विधिलिखित स्मरामि।

श्लिष्टं—'श्रीकृष्ण शरणं मम' इति ऋषिवल्लभाचार्यकथित नित्यकर्म स्मरामि।

सर्वेषा पादाना सप्तमाक्षर कर्णिकायामेकरूपम्।

रुक्मिणी का पत्र—हे श्री (शोभा) के निवास (अथवा लक्ष्मी के निवास), हे पृथ्वी के कामदेव, मेरा मन मथित (व्याकुल) है। हे रथियों में श्रेष्ठ, मेरे फैले हुए कष्ट को नाश कीजिए। मैं किसी ऋषि के इस (मेरे पिता के प्रति) कथन को स्मरण करती हूं—"हे भीष्म, निश्चय ही रुक्मिणी मार्ग में सुख रूप 'स्नान' को जो 'ष्णा' धातु से युट् प्रत्यय करने पर सिद्ध है प्राप्त करेगी।"



२२. द्वितीयः पद्मबन्धः




वसुधानाथ देव–श्रीकृपासागर माधव ।
वर्तेऽद्य बहुशोकोष्णः शरणार्थी सदा तव ॥
धरित्र्यां जगदाधार णं धनं देहि राघव ।
महसौख्यद हे राम मनोऽब्जे सुस्थिरो भव ॥

पद्मबन्धलक्षणम्—

कर्णिकातो दलाग्रे च कर्णिकायां दलात्पुनः ।
अनुलोमविलोमाभ्यां क्रमोऽयं पद्मसंज्ञके ॥
(चित्रबन्धकाव्यम्, पृ० २०)

कर्णिका (मध्य) से दल के अग्रभाग में और पुन (दल के अग्रभाग से) कर्णिका में अनुलोम–विलोम के अनुसार गमन करे, यह क्रम पद्मसंज्ञक बन्ध में होता है।

व्याख्या—हे वसुधानाथ हे पृथ्वीनाथ, हे देव, हे कृपासागर, हे माधव, हे वरिष्ठ, हे जगदाधार, हे राघव, हे बहुसौख्यद, हे राम अद्य, अहं, बहुशोकोष्ण: प्रचुरतापसन्तप्त वर्ते। सदा, तव, शरणार्थी। णं ज्ञान धनं च देहि। मम मनोऽब्जे हृदयकमले, सुस्थिरो भव। 'णकार सूचरे ज्ञाने' इत्येकाक्षरी।

श्लिष्टः—श्रीकृष्ण शरणं मम।

हे पृथ्वी के नाथ, हे देव, हे कृपासागर, हे माधव, मैं आज बहुत ही शोक से सन्तप्त हू, आपकी शरण चाहता हू। हे वरिष्ठ, हे जगत् के आधार, हे राघव, आप ज्ञान और धन दीजिए। हे बहुत सौख्य देने वाले राम, आप मेरे मन के कमल में सुस्थिर हो।



## २३. तृतीयः पद्मबन्धः




ॐकाररूपाय हराय चन्द्रा-
नलार्कनेत्राय जटाधराय ।
मोहान्धकारार्काय मृदङ्गवीणा-
नादातिहृष्टाय नमः शिवाय ॥

पद्मबन्धलक्षणम्—

अन्ते च विरताः पादाः श्लिष्टा भिन्नार्थवाचकाः ।
सुगमः पद्मबन्धोऽयं प्रायशः सर्ववृत्तिषु ॥

निर्दिष्टपूर्वमेतल्लक्षणम् ।

व्याख्या—ॐकाररूपाय ॐकारस्वरूपाय, हराय, चन्द्रानलार्कनेत्राय चन्द्राग्निसूर्यलोचनाय, जटाधराय, मोहान्धकार्काय मोहान्धकसूर्याय, शिवाय मृदङ्गवीणानादातिहृष्टाय, महेश्वराय नम ।

श्लिष्टं —ॐ नमो नारायणाय ।

ॐकाररूप, हर, चन्द्र अग्नि और सूर्य रूप तीन नेत्रों वाले, जटा धारण करने वाले, मोहरूपी अन्धक (अन्धकार, अथवा अन्धक नामक असुर) के लिए सूर्य रूप, मृदङ्ग और वीणा के नाद से प्रसन्न होने वाले शिवजी को नमस्कार है ।



## २४. चतुर्थः पद्मबन्धः ( अपूर्वः )



ॐकाररूप हे देव नन्दीश्वर शिवाधव ।
मोक्षप्रद हृतद्वन्द्व नागभूषण हे शिव ॥
राजराजसुहृच्छर्व यज्ञरूप महोत्सव ।
णाम्बुधे जनसद्भाव यशोधवल मामव ॥

पद्मबन्धलक्षणम्—

मध्ये च विरताः पादाः श्लिष्टा भिन्नार्थवाचकाः।
सुधिया स्वधिया प्रोक्तं पद्ममष्टदलाभिधम्॥

(चित्रबन्धकाव्यम्, पृ० १२)

मध्य में सभी चरण समाप्त होते हैं और श्लिष्ट अक्षरों से भिन्न अर्थ सूचित होता है, इस प्रकार 'अष्टदल पद्म' को सुधी ने अपनी बुद्धि से कहा है।

व्याख्या—हे ॐकाररूप ॐकारस्वरूप, हे देव, हे नन्दीश्वर, हे शिवाधव, पार्वतीपते, हे मोक्षप्रद हे मुक्तिदातः, हे हृतद्वन्द्व द्वन्द्वनाशक, हे नागभूषण सर्पभूषण, हे राजराजसुहृद् धनाधिपमित्र, हे शर्व शिव, हे यज्ञरूप यज्ञस्वरूप, हे महोत्सव उत्सवपूर्ण, हे णाम्बुधे ज्ञानसमुद्र, "णकारः सूकरे ज्ञाने" इत्येकाक्षरी। हे जनसद्भाव भक्तजनसद्भावकारक, हे यशोधवल यशसा कीर्त्या धवल, हे शिव, मां अव रक्ष।

श्लिष्टः—ॐ नमो नारायणाय।

हे ॐकारस्वरूप, हे देव, हे नन्दीश्वर, हे पार्वतीपते, हे मोक्ष देने वाले, हे द्वन्द्व के नाशक, हे सर्प के भूषण वाले, हे कुबेर के मित्र, हे शर्व, हे यज्ञरूप, हे उत्सवपूर्ण, हे ज्ञान के समुद्र, हे भक्तजनों पर सद्भाव रखने वाले, हे यश से उज्ज्वल, हे शिवजी मेरी रक्षा कीजिए।



## २५. पञ्चमः पद्मबन्धः




मालिनी रघुवरप्रियाऽऽदिमा मात्तभीः प्रियरसा क्षमासमा ।
मादिजाऽक्षरदया शुभागमा मासना शुचिजपा सुनिर्ममा ॥
मागधी सुधनदा जयालिमा मामवेज्जनकजा रमोत्तमा ॥

पद्मबन्धलक्षणम्—

कर्णिकातः समारभ्य कर्णिकायां समापयेत् ।
षट्सु पर्णेषु वृद्धेषु लघुपर्णेषु षट्सु च ॥

(स्वनिर्मितम्)

छ बड़े दलों में तथा छ छोटे दलों में कर्णिका से आरम्भ करके कर्णिका में समाप्त करें ।

व्याख्या—मालिनी स्रग्विणी, रघुवरप्रिया, आदिमा आद्यलक्ष्मी, मात्तभी अगृहीतभया, प्रियरसा, क्षमासमा पृथिवीसमा, मादिजा मादा लक्ष्म्या आदिजा, "म शिवश्चन्द्रमा वेधा मा लक्ष्मीश्च प्रकीर्तिता" इत्येकाक्षरी । अक्षरदया अक्षया दया यस्या सा, शुभागमा शुभागमना, मासना मे चन्द्रे आसन यस्या सा चन्द्रमण्डलस्था, शुचिजपा पवित्रजपा, सुनिर्ममा निरहङ्कारा, मागधी शरीरस्य सुगन्धेन एलासदृशी, सुधनदा, जया, आलिमा आलिषु सखीषु मो मानो यस्या सा, "मा च मातरि माने च" इत्येकाक्षरी । रमोत्तमा, जनकजा सीता मां रामरूप अवेत् रक्षेत् । रथोद्धतावृत्तम् ।

श्लिष्टे —"वरद जनक" ।

अस्मिन् पद्मबन्धेऽन्यदपि पद्म वर्तते (अनुगामिपृष्ठे द्रष्टव्यम्) ।

माला धारण करने वाली, रघुश्रेष्ठ राम की प्रिया, आदिशक्ति, भयरहित, रसों में प्रेम रखने वाली, पृथ्वी के सदृश, लक्ष्मी से भी पहले प्रकट हुई, अक्षय दयावाली, शुभ आगमन वाली, चन्द्र में आसन ग्रहण करने वाली, पवित्र जप से युक्त, निरहङ्कार, मगधराज की पुत्री सुष्ठु धन अर्पित करने वाली, सखियों में मान को प्राप्त, लक्ष्मी से भी श्रेष्ठ, जनकनन्दिनी सीताजी मुझ रामरूप की रक्षा करें ।



## २६. षष्ठः पद्मबन्धः ( अपूर्वः )




मालिनी रमोत्तमा मात्तभीः प्रियादिमा ।
मादिमा क्षमासमा मासना शुभागमा ॥
मागधी सुनिर्ममा मामवेज्जयालिमा ।

पूर्वस्मिन् पट्दले पद्मे पद्ममिदमन्तर्भूतम्। 'कर्णिकातः समारभ्य कर्णिकायां समापयेदि'त्येवात्रापि लक्षणमनुसर्तव्यम्।

व्याख्या--मालिनी मालाधारिणी, रमोत्तमा लक्ष्म्या अपि उत्तमा, मात्तभी. अप्राप्त-भया, प्रिया वल्लभा, आदिमा आदिशक्ति', मादिमा लक्ष्म्या अपि आदिलक्ष्मी, क्षमासमा पृथ्वीतुल्या, मासना मे चन्द्रे आसन यस्या सा, शुभागमा, सुनिर्ममा निरहङ्कारा, जया विजया, आलिमा आलिषु सखीषु मो मानो यस्या सा, मागधी एलासदृशी, मा रामरूप अवेद् रक्षेत्। चामरवृत्तम्।

माला धारण करने वाली, लक्ष्मी से भी उत्तम, भय से रहित, प्रिया, आदिशक्ति, लक्ष्मी से भी आदि में उत्पन्न, चन्द्र के आसन पर स्थित, शुभ आगमन वाली, शरीर की सुरभि से एला (इलायची) के सदृश, निरहङ्कार, विजयशीला, सखियों में मान को प्राप्त जानकी मुझ रामरूप की रक्षा करें।



## २७. सप्तमः पद्मबन्धः



जानकी रामजाया मा मायाजाऽवतु जातजा ।
जातजालद्विजाधाराऽऽराधाऽजा नैचिकीनजा ।।

पद्मबन्धलक्षणम्—

कर्णिकायां न्यसेदेकं द्वे द्वे दिक्षु विदिक्षु च।
प्रवेशनिर्गमौ दिक्षु कुर्यादष्टदलाम्बुजे॥
(सर० क० चित्रप्र० पृ० २७)

इस अष्टदल कमल में, कर्णिका में एक अक्षर का न्यास करे तथा दिशाओं और विदिशाओं में दो-दो अक्षरों का न्यास करे, दिशाओं में प्रवेश और निर्गम करे एवं विदिशाओं में प्रवेश अथवा निर्गम करे।

व्याख्या—रामजाया रामपत्नी, अजा जन्मरहिता, माया, जातजा श्रेष्ठकुलोत्पन्ना, "जातोन्नद्धप्रवृद्धा स्युः" इत्यमरः। जातजालद्विजाधारा जात जाल पाश कष्ट वा ते जात-जाला द्विजा पक्षिणो ब्राह्मणाश्च तेषामाधारो या सा। कपोतादिकथा प्रसिद्धा, ब्राह्मणकथा तु कलिकाले प्रसिद्धा। आराधा आराधनयोग्या, अजा ईश्वरी, नैचिकीनजा नैचिकी कामधेनु 'उत्तमा गोषु नैचिकी' इत्यमरः, तस्या इन स्वामी, तस्माज्जाता, जानकी जनकपुत्री, मा मा अवतु रक्षतु।

जानकी, इरा वाणी, मजाया शिवपत्नी, मा लक्ष्मी, अजा, माया, राधा, सर्वा अवन्तु इत्यपरोऽर्थः।

राम की धर्मपत्नी, जन्म से रहित, मायास्वरूपा, श्रेष्ठ कुल में उत्पन्न, जिन द्विजों (पक्षियों अथवा ब्राह्मणों) ने जाल (पाश या कष्ट) उत्पन्न है उनकी आधाररूपा, आराधन के योग्य, कामधेनु के स्वामी से उत्पन्न, जनक की पुत्री जानकी मेरी रक्षा करें।

(श्लेष से—) जानकी, इरा (वाणी), मजाया (शिवपत्नी), मा (लक्ष्मी), अजा, माया, राधा सभी रक्षा करें।



## २७. सप्तमः पद्मबन्धः




जानकी रामजाया मा मायाजाऽवतु जातजा ।
जातजालद्विजाधाराऽऽराधाऽजा नैचिकीनजा ॥

पद्मबन्धलक्षणम्—

कर्णिकायां न्यसेदेकं द्वे द्वे दिक्षु विदिक्षु च।
प्रवेशनिर्गमौ दिक्षु कुर्यादष्टदलाम्बुजे॥
(सर० क० चित्रप्र० पृ० २७)

इस अष्टदल कमल में, कर्णिका में एक अक्षर का न्यास करे तथा दिशाओ और विदिशाओ में दो-दो अक्षरो का न्यास करे, दिशाओ में प्रवेश और निर्गम करे एव विदिशाओ में प्रवेश अथवा निर्गम करे।

व्याख्या—रामजाया रामपत्नी, अजा जन्मरहिता, माया, जातजा श्रेष्ठकुलोत्पन्ना, "जातोन्नद्धप्रवृद्धा स्युः" इत्यमर। जातजालद्विजाधारा जात जाल पाश कष्ट वा ते जात-जाला द्विजा पक्षिणो ब्राह्मणाश्च तेपामाधारो या सा। कपोतादिकथा प्रसिद्धा, ब्राह्मणकथा तु त्रिकाले प्रसिद्धा। आराधा आराधनयोग्या, अजा ईश्वरी, नैचिकीनजा नैचिकी कामधेनु "उत्तमा गोषु नैचिकी" इत्यमर, तस्या इन स्वामी, तस्माज्जाता, जानकी जनकपुत्री, मा मा अवतु रक्षतु।

जानकी, इरा वाणी, मजाया शिवपत्नी, मा लक्ष्मी, अजा, माया, राधा, सर्वा अवन्तु इत्यपरोऽर्थ।

राम की धर्मपत्नी, जन्म से रहित, मायास्वरूपा, श्रेष्ठ कुल में उत्पन्न, जिन द्विजो (पक्षियो अथवा ब्राह्मणो) के जाल (पाश या कष्ट) उत्पन्न है उनकी आधाररूपा, आराधन के योग्य, कामधेनु के स्वामी से उत्पन्न, जनक की पुत्री जानकी मेरी रक्षा करें।

(श्लेष से—) जानकी, इरा (वाणी), मजाया (शिवपत्नी), मा (लक्ष्मी), अजा, माया, राधा सभी रक्षा करें।



## २८. अष्टमः पद्मबन्धः




राजते कमलाकारा राकाभा कामसङ्गरा ।
रागकृष्णा धराधारा राधा पालितनिर्जरा ॥

पद्मबन्धलक्षणम्—

कर्णिकातो नयेदूर्ध्वं पत्राकाराक्षरावलीम् ।
प्रवेशयेत् कर्णिकायां पद्ममेतच्चतुर्दलम् ॥
(सर० क० चित्रप्र० पृ० १४)

पत्राकार की अक्षरावली को कर्णिका से ऊपर ले जाय और कर्णिका में प्रवेश करा दे, इस प्रकार यह चतुर्दल पद्म है ।

व्याख्या—कमलाकारा कमलेव लक्ष्मीरिव आकारो यस्या सा, राकाभा राकया भातीति, कामसङ्गरा कामेन सङ्गरोऽङ्गीकारो यस्या सा, अथवा कामो मनोरथस्तस्य सङ्गं राति ददातीति, रागकृष्णाधरा रागेण अनुरागेण कृष्णस्य अधर आधारो यस्या सा, अथवा रागकृष्णा रागेण अङ्गरागेण कस्तूरीप्रभृतिलेपेन कृष्णा कृष्णसदृशी, धराधारा वसुधाधारा पालितनिर्जरा पालितदेवा, राधा राजते शोभते ।

लक्ष्मी के सदृश आकार वाली, राका (पूर्णिमा) से शोभा प्राप्त करने वाली, काम के साथ अङ्गीकार को प्राप्त (अथवा काम अर्थात् मनोरथ के सङ्ग-साफल्य को देने वाली), अनुराग से कृष्ण के अधर के आधार वाली एवं पृथ्वी की आधाररूपा, देवताओं का पालन करने वाली राधा शोभित होती है ।



## २९. नवमः पद्मबन्धः




मायाभव्या सरागा, वरदद दरव, स्वामरा(ऽ)ज्ञेयहेमा
माहेयज्ञेन्दुरूपा, कनककककनक, श्रीपराङ्गा(ऽऽ)गता(ऽ)मा ।
माता गङ्गावसुग्रा, सिन मम मनसि स्वाङ्ककान्ता(ऽ)दलोमा
मालोदन्ता सुमन्त्रा, तु सवव वसतु, ज्वालदिव्याभया मा ॥

पद्मबन्धलक्षणम्—

निविष्टाष्टदलन्यासमिदं पादार्द्धभक्तिभिः।
अस्पृष्टकर्णिकं कोणैः कविनामाङ्कमम्बुजम्॥
(सर० क० चित्रप्र० पृ० ३२)

चरण के अर्ध-भागो से बधे हुए आठ दलो के न्यास वाला तथा कोणो द्वारा कर्णिका को स्पर्श न करने वाला यह कवि के नाम से अङ्कित पद्म है।

व्याख्या—हे वरदद वरान् ददत इति तत्सम्बुद्धौ, हे दरव दे कलत्रे रवो यस्य तत्सम्बुद्धौ, "दकारोऽभ्रे कलत्रे च" इत्येकाक्षरी। हे कनककनक कनक सुवर्णं कं जल कनकके कनकमिव सुवर्णमिव यस्य तत्सम्बुद्धौ, हे असिनं असिं खड्गं नयतीति तत्सम्बुद्धौ, हे सवव सवस्य यज्ञस्य वं फलं तत्सम्बुद्धौ, "यज्ञ. सवोऽध्वरो याग." इत्यमरः। "कलशे वः फलेऽपि च" इत्यकाक्षरी। भव्या कल्याणरूपा, माया, सरागाऽनुरागवती, स्वामरा स्व स्वसेवका अमरा देवा यस्याः सा, अज्ञेयहेमा अज्ञेय हेम सुवर्णं यस्यां सा, सुवर्णशरीरयोरेकरूपत्वात्, माहेयज्ञा माहेय वृषं नन्दिन जानातीति, इन्दुरूपा चन्द्ररूपा, श्रीपराङ्गा श्रीपराणि शोभापराणि अङ्गानि यस्याः सा, अमा समीपे आगता प्राप्ता, "अमा सह समीपे च" इत्यमरः। गङ्गावसुधा गङ्गेव वसु रत्नं धरतीति "वसू रत्ने धने वसु" इत्यमर.। स्वाङ्ककान्ता स्वाङ्के स्वोत्सङ्गे कान्त पतिर्यस्या सा, एकाग्रेश्वरकथाया शिव-स्वाङ्के धृतवती, अदला अपर्णा, तपसि विल्वदलभोजनमपि तत्याजेति भाव, मालोदन्ता मालेव उदन्तो यस्या सा, सुमन्त्रा शोभनगुप्तवादा, ज्वालदिव्या ज्वालैः प्रकाशैर्दिव्या, अभया निर्भया, मा लक्ष्मीस्वरूपा, उमा माता मम मनसि वसतु। स्रग्धरावृत्तम्।

श्लिष्टः—रामरूपसुकमल।

हे वर देने वाले, हे कलत्र के प्रति प्रेमव्यञ्जक शब्द कहने वाले, हे धतूर और जल को कनक समझने वाले, हे खड्ग धारण करने वाले, हे यज्ञ के फलस्वरूप, भव्या, मायारूपा, अनुरागवती, अपने सेवक देवताओ से युक्त, वृष को जानने वाली, इन्दुरूपा, शोभा से भी बढ कर शोभित होने वाले अक्षरो वाली, समीप में प्राप्त, अपने पति को अङ्क में रखने वाली, अपर्णा उमा मेरे मन में निवास करें।

## घ. प्रकीर्णबन्धाः

### ३०. सर्वतोमुखबन्धः




काशी प्रिया सुरनदी गिरिजा विशोका
कारामसेचनकरी भवसिन्धुनौका ।
कामप्रदा विमलभाललसच्छशाङ्का
कामानुताऽवतु सदा भवभूषणैका ॥

सर्वतोमुखलक्षणम्—

स्वेष्टं दले कर्णिकायां विन्यस्य परितो भ्रमेत् ।
कर्णिकातः कणिकायां बन्धेऽत्र सर्वतोमुखे ॥
(चित्रबन्धकाव्यम्, पृ० ५९)

व्याख्या—प्रिया शिवप्रिया, विशोका शोकरहिता, कारामसेचनकरी क सुख एवं आराम तस्य सेचनकरी आनन्दवनसेचनकर्त्री, भवसिन्धुनौका ससारसमुद्रतरी, कामप्रदा मनोरथदात्री, विमलभाललसच्छशाङ्का विमले भाले ललाटे लसन् विराजमान शशाङ्कश्चन्द्रो यस्याः सा, काभानुता कस्य ब्रह्मण आभया नुता स्तुता, भवभूषणैका भवस्य शिवस्य भूषणेषु एका मुख्या, काशी, सुरनदी गङ्गा, गिरिजा पार्वती, च सदा, अवतु रक्षतु ।

श्लिष्टं —काशी रामभा ।

शिव की प्रिया, शोक से रहित आनन्दवन का सेचन करने वाली, ससार के समुद्र से पार करने वाली नौका, मनोरथ सिद्ध करने वाली निर्मल ललाट पर शोभित होते हुए चन्द्र वाली, ब्रह्माजी की आभा द्वारा स्तुत, शिवजी के भूषणों में से एक (मुख्य) काशी, गङ्गा और पार्वती सदा रक्षा करें ।



मानसधामन् कामदनामन् मित्रसुदामन् पालय धीमन्
मानद राकाकान्त भजामि मित्रभरूपापार वसामा ॥
नर्तनपद्म मन्त्रसुपात्र त्रस्तसुपाल लम्बितगान ।
सर्वविनोद दक्षसभासु सुप्रभकाय यज्ञ सुहंस ।
धातृप नानानाट्य यशोदादामभ सद्धीधीद हि माधाः ॥

सरोबन्धलक्षणम्—

कोणेभ्यः परितः स्तम्भे सश्लेषं सर्वतः पुनः ।
सम्पठेत् पाठकश्चात्र सरोबन्धे कविप्रियः ॥

(चित्रबन्धकाव्यम्, पृ० ५५)

कवि के प्रिय पाठक को चाहिए कि इस सरोबन्ध में स्तम्भ में कोणो से चारो ओर भ्रमण करे, पुन श्लेष के सहित सभी ओर पढे ।

व्याख्या—हे मानसधामन् मानससरोवरवासिन् हस अथवा चित्तवास, हे कामदनामन् मनोरथपूरकनामधारिन्, हे मित्रसुदामन् हे धीमन् पालय मामिति शेष । हे मानद, हे राकाकान्त पूर्णिमारात्रिपते अह त्वा भजामि । हे मित्रभरूप सूर्यकान्तिसदृश अतएव नर्तनपद्म हृत्कमले खेलकारक, हे अपार, अमा समीपे वस । हे मन्त्रसुपात्र गुप्तभाषणपात्र, हे त्रस्तसुपाल, हे लम्बितगान, हे सर्वविनोद, हे सभासु दक्ष, हे सुप्रभकाय, हे यज्ञ यज्ञपुरुष, हे सुहस मराल अथवा सूर्य, हे धातृप, हे नानानाट्य, हे यशोदादामभ दामोदर, सद्धीधीद बुद्धिमता बुद्धिदात ,, हि निश्चयेन मा मा अधा अपालय ।

हे मानस (मानस सरोवर अथवा चित्त) में निवास करने वाले, हे मनोरथ के पूरक नाम धारण करने वाले, हे सुदामा जैसे मित्र वाले, हे श्रीमन् (मेरी) रक्षा कीजिए । हे मान देने वाले, हे पूर्णिमा के पति, मैं तुम्हारी सेवा करता हू । हे सूर्य के सदृश, हे हृदय के कमल में खेल करने वाले, हे अपार, (मेरे) समीप निवास कीजिए । हे गुप्त भाषण के पात्र, हे त्रस्त जना की रक्षा करने वाले, हे लम्बितगान, हे सर्वविनोद, हे सभाओ में दक्ष, हे शोभन प्रभा से यक्त शरीर वाले, हे यज्ञ, हे सुहस (मराल या सूर्य), हे धाता की रक्षा करने वाले, हे नाना प्रकार के नाट्य करने वाले, हे यशोदा के दाम से शोभित, हे बुद्धिशालिया को बुद्धि देने वाले, निश्चय ही आपने मुझे पालन किया ।

## ३२. कूपबन्धः




जगदीश सुधावाक्य जनाह्लादक हासप ।
जलार्थिन्याः सदासारा जलजेक्षण देहि कू ॥
यशोदाज पटाच्छंकू कूपस्य हर दीनप ।
पते कनकमद्हाराराधनं कुरु मानय ॥

कूपबन्धलक्षणम्—

मध्यतः परितो गच्छेन्नेमौ सश्लेषमेव च।
एवं न्यासक्रमो ज्ञेयः कूपबन्धे हि नूतने॥

(चित्रबन्धकाव्यम्, पृ० ५४)

पहले मध्य से चारो ओर गमन करे, पुन श्लेष के साथ नेमि में गमन करे, इस प्रकार नूतन कूपबन्ध में न्यास का क्रम समझना चाहिए।

व्याख्या—हे जगदीश हे सुधावाक्य अमृतवचन, हे जनाह्लादकहासप जनान् आह्लादयतीति त जनाह्लादक हास पातीति तत्सम्बुद्धौ, हे जलार्थिन्या जलाभिलाषिण्या जनताया सदासार हे अ विष्णो, "अकारो वासुदेव स्यात्" इत्येकाक्षरी। हे जलजेक्षण कमलनयन, कू पृथिव्यौ आरोहमार्गं अवतरणमार्गं च, देहि (एतेन भवत प्रदक्षिणा भविष्यति)। मार्गालाभे पाटलवाटिकातो गच्छन्ती गोपी कण्टकावृतवस्त्रा प्रोवाच—हे यशोदाज यशोदापुत्र, कूपस्थ कूपनिकटस्थ, हे दीनप दीनजनरक्षक, पटात् वस्त्रात्, शङ्कू बाह्याभ्यन्तरे कण्टके हर अपनय। (कण्टकमोचनव्याजेन कृष्णो हार जहार)। हे पते स्वामिन्, कनकमद्हाराराधन, मा कुरु आनय, (अथवा) हाराराधन कुरु मानय आदरय मामिति शेष।

श्लिष्टं—जय कूपराज।

हे जगदीश, हे सुधामधुर वचन बोलने वाले, हे लोगो के आह्लादक हास प्रान्त करने वाले, हे जलार्थिनी प्रजा के हेतु सदा वर्षा करने वाले, हे विष्णो, हे कमलनयन, पृथिवियो—आरोहमार्ग और अवतरणमार्ग—को दीजिए (इससे आपकी प्रदक्षिणा होगी)। (मार्ग प्राप्त न होने पर पाटल पुष्पो की वाटिका से जाती हुई गोपी काटो में वस्त्र के उलझ जाने पर बोली—) 'हे यशोदा के पुत्र, हे कूप के निकट में स्थित, हे दीन जनो की रक्षा करने वाले (मेरे) वस्त्र से (बाह्य और अभ्यन्तर) कण्टका को छुडाइए'। (किन्तु कण्टकमोचन के बहाने कृष्ण ने उसका हार निकाल लिया, तब बोली)—कनकमय हार का ग्रहण मत कीजिए, लाइए (अथवा हार का ग्रहण कीजिए और मेरा आदर कीजिए।)

## ३३. उलूखलबन्धः




भद्रवास सदावन्द्य यमलार्जुनतारक ।
कञ्जनेत्र स्मिताधार रत्नेश ललनामह ॥
हरे हेलाकृतेऽशङ्क कद्युलूखलबद्धभ ।
ललितं कुरु सर्वं कं सर्वकामप्रपूरक ॥

उलूखलबन्धलक्षणम्—

मध्यकोणीयकोष्ठेषु स्वेष्टं विन्यस्य सर्वतः।
भ्रमेन्निम्नत ऊर्ध्वन्तु मध्ये ह्यूर्ध्वादुलूखले ॥
(चित्रबन्धकाव्यम्, पृ० ३४)

उलूखल-बन्ध में, मध्य और कोणीय कोष्ठो में अपने इष्ट (श्लिष्ट) को विन्यस्त करके सब ओर नीचे, पुन ऊर्ध्व के क्रम से भ्रमण करे और मध्य में निम्न से बीच में और पुन ऊर्ध्व से बीच में आगमन करे।

व्याख्या—हे भद्रवास भद्रेषु वासो यस्य तत्सम्बुद्धौ, हे सदावन्द्य हे यमलार्जुनतारक, हे कञ्जनेत्र, हे स्मिताधार, मन्दहाससशोभित, हे रत्नेश, हे ललनामह व्रजवनितोत्सव, हे हरे; हे लाकृते लृरिव आकृतिर्यस्य स तत्सम्बुद्धौ, हे अशङ्क, हे कट्युलूखलबद्धभ कट्या उलूखलबद्ध सन् भातीति तत्सम्बुद्धौ, हे सवकामप्रपूरक सर्वं ललित क सुख कुरु।

श्लिष्टं—सकलभयहर।

हे भद्रजनो में रहने वाले, हे सदा वन्दनीय, हे यमलार्जुन के तारक, हे कञ्जनेत्र, हे मन्द हास से शोभित, हे रत्नेश, हे व्रज की ललनाओ के उत्सव, हे हरि, हे लृ की भाति आकृति वाले, हे अशङ्क, हे कटि में उलूखल से बद्ध होने के कारण शोभित, हे सभी कामनाओ के प्रपूरक, सब प्रकार के ललित सुख दीजिए।



रामकामद्रुम श्रीमन् कमलामञ्जुमङ्गल ।
सोमाभमाध्यमालाभृत्सीवालतादृताङ्ग हे ॥
गायन्ति यतयः कीराः सेवन्ते बहुबन्धुभिः ।
श्रियं हयं जयं देहि हीनदीनजनप्रिय ॥

प्रेमलतबन्धलक्षणम्—

उपरिष्टात्पार्श्वतश्चाधस्तात्तु मध्यभागके ।
ततः पार्श्वे क्रमादूर्ध्वं लताबन्धे सरेद् बुधः ।
(चित्रबन्धकाव्यम्, पृ० ५३)

ऊपर से, पार्श्व से, नीचे से क्रमश मध्य में, पुन पार्श्व में और इसी प्रकार क्रम से ऊपर विद्वान् इस लताबन्ध में सरण करे ।

**व्याख्या**—हे श्रीमन्, हे कमलामञ्जुमङ्गल, लक्ष्म्या मञ्जुलमङ्गलकारक, हे सोमाभमाध्यमालाभृत्सीतालतादृताङ्ग चन्द्रोज्ज्वलकुन्दमालाधारिण्या सीतालतया वेष्टिताङ्ग, बहुबन्धुभि सार्धं यतय कीरा शुकदेवादया, गायन्ति, सेवन्ते, च त्वामिति शेष । हे हीनदीनजनप्रिय, रामकामद्रुम रामकल्पवृक्ष, श्रिय धन हय जय च देहि ।

हे श्रीमन्, हे लक्ष्मी के मन्जु-मङ्गल करने वाले, हे चन्द्र-सदृश उज्ज्वल कुन्द-माला धारण करने वाली सीता रूपी लता से वेष्टित अङ्गो वाले, बहुत से बन्धु जनो के साथ यति कीर (शुकदेव आदि) तुम्हें गान करते हैं और सेवा करते हैं, हे हीन दीन जनो के प्रिय, हे रामरूप कल्पवृक्ष ! श्री, हय, जय दीजिए ।



## ३५. मालाबन्धः



मालया राज हे रुद्र सुमाघ्यमालतीजया ।
नागराजस्रजः साघ्व्या हे शम्भो रुचिरद्रव ॥

मालाबन्धलक्षणम्--

मध्यतः पदमेकन्तु गोमौत्रेण पदत्रयम् ।
जानन्तु शेमुषीश्रेष्ठा मालाबन्धे हि नूतने ॥

(चित्रबन्धकाव्यम्, पृ० २७)

मध्य में एक पाद और तीन पाद गोमूत्रिका के अनुसार चलते हैं, यह प्रकार बुद्धिमान् लोग इस नूतन मालाबन्ध में जानें ।

व्याख्या—' हे रुद्र, हे शम्भो, हे रुचिरद्रव शोभनहास, "द्रवकेलिपरीहासा" इत्यमर । सुमाध्यमालतीजया कुन्दजातिनिर्मितया, नागराजस्रज नागेन्द्रहारात्, साध्व्या शोभनया, मद्-रचितया मालया, राज विराजमानो भव ' (इति मुग्धाया पार्वत्या वचनं श्रुत्वा शिव प्रसन्नो भूत्वा रुचिर स्मित चकारेति भाव ) ।

प्रथम पादो गूढ —'मालया राज हे रुद्र' ।

' हे रुद्र, हे शम्भो, हे शोभन हास वाले, कुन्द और जाति पुष्पों से बनी हुई, नागराज के हार से भी शोभन (मेरी बनाई हुई) माला से आप विराजमान हो ' । (इस प्रकार मुग्धा पार्वती का वचन सुनकर शिवजी ने प्रसन्न होकर रुचिर स्मित किया)



वस हृदि तत . वित्तं देहि सीतानुताव
तव पदरजसा सौभाग्यवर्णं वृणीमः ।
सुजन जययशोमा मङ्गला यान्तु मन्नो
करविरचितसीताकेशधार्याब्ज यात्रिन् ॥

प्रभमालाबन्धलक्षणम्—

गोमूत्रिकाक्रमेणैव चतुष्पादास्तु मध्यतः ।
भिन्नार्थवाचकाः शब्दा मालाबन्धे हि नूतने ॥

(चित्रबन्धकाव्यम्, पृ० २६)

इस नूतन मालाबन्ध में चार चरण मध्य में (श्लिष्ट) होते हैं और गोमूत्रिका के क्रम से (उन चार चरणों से) भिन्न अर्थ के वाचक शब्द रखे जाते हैं।

व्याख्या—हे तत सर्वव्यापक, हृदि, वस, ममेति शेष । वित्तं, देहि, हे सीतानुत जानक्या स्तुत, अव रक्ष, तव, पदरजसा (वय) सौभाग्यवर्णं, वृणीम । हे सुजन, करविरचित-सीताकेशधार्याब्ज करेण विरचित सीताकेशाना धार्यं अब्ज येन तत्सम्बोधने, हे यात्रिन् वनयात्राकारक, मङ्गला, जययशोमा जयकीर्तिलक्ष्म्य. मत् मत्सकाशात्, नो यान्तु नो गच्छन्तु ।

श्लिष्टैः—सततं सीतावर, सौवर्णी जयमाला, मद्रचिता धार्या ।

हे सीतावर, मद्रचिता रामरूपरचिता, सौवर्णी शोभनवर्णमयी कनकमयी वा, त्वया, सततं, जयमाला, धार्या ।

हे सर्वव्यापक, मेरे हृदय में वास कीजिए, धन दीजिए। हे सीता द्वारा स्तुत, रक्षा कीजिए। तुम्हारे पद की धूलि से हम लोग सौभाग्य का वर्ण प्राप्त करते हैं। हे सुजन, हे हाथ से बनाए हुए सीता के केशपाश को कमल से भूषित करने वाले, हे (वन की) यात्रा करने वाले, मङ्गलरूप ! जय, यश और लक्ष्मी मेरे समीप से न जाए।

श्लेष.—हे सीता के वर, मैंने सुवर्ण की जयमाला बनाई है, उसे निरन्तर धारण करें।

## ३७. व्योमबन्धः



वरुणामृड सादरलेख विनायकरञ्जन देव
वरद स्वमरेश्वर हे हितदान रिपे जनताव ।
करुणामृतसागर दुःखविनाशक हे जगदेक
शरणं स्वपुरे हर देहि सदा गिरिराजसुताश ॥

व्योमबन्धलक्षणम्—

अष्टादशशिखरचरीं गोमूत्रिकया चतुष्पदीं पश्येत्।
पत्राद्यन्तैर्दृष्टां स ज्ञेयो व्योमबन्ध इति ॥

(सर० क०, चित्रप्र० ४७ श्लो०)

जहाँ पाद के आदि और अन्त वर्ण एक हों और (तीन खण्डो में विभाजित) अट्ठारह शिखरो (कोष्ठो) में चतुष्पदी को गोमूत्रिका के क्रम से देखे उसे 'व्योमबन्ध' जाने।

व्याख्या—हे वरुणामृड वरुणानदीतटस्थशिव, हे सादरलेख सादरा आदरयुक्ता लेखा, देवा यस्मिंस्तत्सम्बुद्धौ, हे विनायकरञ्जन गणेशाह्लादक, हे देव हे वरद, हे स्वमरेश्वर शोभनदेवेश्वर, हे हितदान, हे रिपे (रिपिर्व्यञ्जनादिश्च, 'विद्याविदग्धमतयो रिपयः प्रवृद्धाः' इति बालपण्डितजातकात्), हे जनताव जनता अवतीति तत्सम्बोधने, हे करुणामृतसागर, हे दुःखविनाशक, हे जगदेक जगत्सु एक मुख्य, "एके मुख्यान्यकेवला" इत्यमरः। सदा सतत, हे गिरिराजसुताश गिरिराजसुतायां पार्वत्या आशा यस्य तत्सम्बोधने, हे हर शिव, स्वपुरे काश्या, शरणं देहि।

हे वरुणा नदी के तट पर स्थित शिव जी, हे देवताओ से आदर को प्राप्त, हे गणेशजी के अह्लादक, हे देव, हे वरद, हे शोभन देवताओ के स्वामी, हे हित देनेवाले, हे ऋपे, हे जनता की रक्षा करने वाले, हे करुणामृतसागर, हे ससार में एक (मुख्य), हे गिरिराजसुता पार्वती के प्रति आशा से युक्त, हे हर, अपने नगर (काशी) में शरण दीजिए।



३८. सूर्यबन्धः




रक्ष मा वर संसारप श्रीधीद महेश हे ।
हेश हेमद धीश्रीप रसासंरव माक्षर ॥

सूर्यबन्धलक्षणम्—

द्वे पदे अनुलोम्नाऽत्र विलोम्ना च पदद्वयम् ।
भिन्नार्थवाचकाः शब्दा बन्धे मिहिरसंज्ञके ॥

(चित्रबन्धकाव्यम्, पृ० ४७)

सूर्यबन्ध में दो पाद अनुलोम से और दो विलोम से पढे जाते है तथा शब्द भिन्न अर्थ के वाचक होते है।

व्याख्या--हे वर श्रेष्ठ, हे ससारप, हे श्रीधीद, हे महेश, मा मा, रक्ष, हे हेश हस्तीश, हे हेमद स्वर्णद, हे धीश्रीप, हे रसासंरव रसाया पृथिव्या स सम्यक् रव शब्दो यस्य तत्सम्बद्धौ, हे म सूर्य, हे अक्षर नाशरहित, रक्षेति शेष ।

हे श्रेष्ठ, हे ससार की रक्षा करने वाले, हे श्री और धी को देने वाले, हे महेश, मेरी रक्षा कीजिए। हे हस्तीश, हे हेम देने वाले, हे धी और श्री की रक्षा करने वाले, हे पृथ्वी में सम्यक् प्रसिद्ध, हे सूर्य, हे अक्षर (नाशरहित), रक्षा कीजिए।



३६. चन्द्रबन्धः




रजनीकरसदुदार रमाभ्रातो रसेश्वर ।
तारकेश कलाधार रक्ष त्वं वरदः पिता ॥

चन्द्रबन्धलक्षणम्—

मध्यतः परितो गच्छेन्नेमावपि ततः परम् ।
इति शैली विजानन्तु बन्धेऽत्र चन्द्रसंज्ञके ॥

(त्रिशबन्धकाव्यम्, पृ० ४८)

मध्य से (दो पादों में) चारों ओर चले पुनः (दो पादों में) नेमि में गमन करे, यह शैली इस चन्द्रबन्ध में जानें ।

व्याख्या—हे रजनीकर निशाकर, हे सद्दार सन्तः शोभना दारा यस्य तत्सम्बुद्धौ, हे रमाभ्रात. लक्ष्मीभ्रात, हे रसेश्वर रसनाथ, हे तारकेश अश्विन्यादिपते, हे कलाधार कलाना आधार, त्वं, रक्ष पालय, त्व वरद पिता वरद पिताऽसि ।

रजनीकर, हे सुन्दर स्त्रियो वाले, हे रमा (लक्ष्मी) के भ्राता, हे रसेश्वर, हे कलाधार, आप रक्षा कीजिए क्योंकि आप वरद पिता हैं ।



## ४०. शिविकाबन्धः




सहासवक्त्रा हरिणा सहैव
वधूवरा प्रासहयेन भर्त्रा ।
व्रातेन वीरैः शिविकासुखस्था
स्थास्नुप्रभावात्पथि संललास ॥

शिविकाबन्धलक्षणम्—

मञ्चमण्डपवैतानस्तम्भवंशसमन्वितः ।
शिविकाबन्ध इत्युक्तो लिपेस्तत्र चमत्कृतिः ॥

(चित्रबन्धकाव्यम्, पृ० २३)

मच, मण्डप, वितान, स्तम्भ और वश से युक्त 'शिविकाबन्ध' कहलाता है, यहाँ केवल लिपि का चमत्कार है।

व्याख्या—रामचन्द्रेण सार्धं जनकपुरात् प्रस्थाने पथि मैथिल्या वर्णनम्—सहासवक्त्रा स्मेरमुखी, वधूवरा वधूत्तमा, प्राप्तहयेन प्राप्तश्यामकर्णाश्वेन, वीरैः सैनिकैः, त्रातेन रक्षितेन, भर्त्रा पत्या, हरिणा रामेण, सहैव, शिविकासुखस्था सुखासनस्थिता, पथि मार्गे, स्यात्नुप्रभावत् सुस्थिरज्योतिरिव, सल्लास विलसति स्म। उपजातिवृत्तम्।

जनकपुर से प्रस्थान के समय मार्ग में राम के साथ सीता का वर्णन—

हासयुक्त मुख वाली, शिविका (पालकी) पर सुखपूर्वक बैठी हुई उत्तम वधू सीताजी घोडे पर सवार, वीरो से रक्षित भर्ता रामचन्द्रजी के साथ ही स्थिरतर ज्योति की भाँति सुशोभित हुई।



पिङ्गवेष्टन सीताकक्रपोलादर्शदर्शक ।
कञ्जनेत्र स्मिताशाल लसद्धर्ष जगद्धव ॥
वसुधानाथ सन्मञ्च चक्रपाणे महाघन ।
नरेन्द्र शीलसिन्धो हे हेलया देहि मामपि ॥

दर्पणबन्धलक्षणम्—

श्लेषे श्लेषे पठन् धीरस्तत्रैव विरमेत्पुनः ।
सुधिया स्वधिया प्रोक्तो बन्धोऽयं दर्पणाभिधः ॥

(चित्रबन्धकाव्यम्, पृ० २४)

प्रत्येक श्लेष को पढता हुआ पुनः उसी में विराम करे, इस प्रकार विद्वान् लोग इसे दर्पणबन्ध कहते हैं।

व्याख्या—हे पिङ्गवेष्टन, पीतवेष्टनधारिन्, हे सीताकक्रपोलादर्शदर्शक सीताया कः सुखं तद्रूप कपोल एवादर्शस्तस्य दर्शकस्तत्सम्बोधने, हे कञ्जनेत्र, हे स्मिताशाल स्मितं आ समन्तात् शालाया यस्य तत्सम्बुद्धौ, हे लसद्धर्ष, हे जगद्धव, हे वसुधानाथ, हे सद्मञ्च काञ्चनमञ्चस्थित, हे चक्रपाणे, हे महाघन, हे नरेन्द्र, हे शीलसिन्धो, हे दानिन्, हेलया कौतुकेन मा लक्ष्मीं, अपि, देहि, मह्यमिति शेषः। पूर्वं यद् दत्तं तन्मया स्वीकृतम् इदानीं धनं देहीति भावः।

दिलष्टं—"पिककलवचन हे"।

हे पीत पगडी धारण करने वाले, हे सीता के सुखरूप कपोल के आदर्श के दर्शक, हे कञ्जनेत्र, हे स्मितशाल, हे शोभित होते हुए हर्ष वाले, हे ससार के नाथ, हे काञ्चन के मच पर स्थित, हे चक्रपाणे, हे महाघन, हे नरेन्द्र, हे शीलसिन्धो, हे दानिन्, (मुझे) लक्ष्मी को भी दीजिए।



सरोजानन माध्याना सकलाधार शर्मद ।
सततं कामदानिन् हे संसारभवकारण ॥
सदा सीतामनोहृद् रासविज्ञ ज्ञानिनां प्रिय ।
सर्वनाथ महाधामसभ्यहृद्वासिरत्नराः ॥
हेमच्छत्रागमश्रीनानानाधरानियन्त्रण ।
महाराम सुमन्त्रेन नः पासि धनिनां धव ॥

छत्रबन्धलक्षणम्—

अश्वतः परितो गच्छेत्ततो नेमिद्वयेऽपि च ।
स्वेष्टं कोष्ठेषु विन्यस्य छत्रबन्धे विदां वरः ॥
(चित्रबन्धकाव्यम्, पृ० २९)

विद्वान् अपने इष्ट को कोष्ठो में विन्यस्त करके, पहले घोडे से चारो ओर चले और फिर दोनों नेमियो में चले ।

व्याख्या—हे सरोजानन, हे माध्यान माया लक्ष्म्या ध्यान यस्मिन् तत्सम्बुद्धौ, हे अ विष्णो, "अकारो वासुदेव स्यात्" इत्येकाक्षरी । हे सकलाधार, हे शर्मद कल्याणद, सतत निरन्तर, हे कामदानिन् अभीष्टदानिन, हे ससारभवकारण ससारजन्मकारण, सदा, हे सीता-मनोहृद्, हे रासविज्ञ (रामावतारेऽपि रासक्रीडा कृता चित्रकूटे), ज्ञानिना प्रिय, हे सर्वनाथ, हे महाधामसभ्यहृद्वासिरत्नरा महातेजस्विसभ्यजनहृदयस्थरत्नघन, हे हेमच्छत्र कनकच्छत्र, हे आगमश्रीनानानाधरानियन्त्रण आगम एव श्रीन श्रीसूर्य ("इन सूर्ये प्रभौ" इत्यमर) तेन आत ब्रह्मण ("आकारस्तु पितामह" इत्येकाक्षरी) नानाधराणा अनेकभूभागाना नियन्त्रण यस्मात् तत्सम्बुद्धौ, हे महाराम महान् आराम उपवन यस्य तत्सम्बुद्धौ, हे सुमन्त्रेन सुमन्त्रस्वामिन्, हे धनिना धव, त्व नोऽस्मान् पासि रक्षसि ।

श्लिष्टः—"हे रामनारायण मम मनसि निवस" ।

हे कमलसदृश मुख वाले, हे लक्ष्मी द्वारा ध्यात, हे विष्णो, हे सबके आधार, हे कल्याणप्रद, हे निरन्तर (भक्तों की) इच्छा पूर्ण करने वाले, हे ससार के जन्म के कारण, हे सदा सीता के मन को हरने वाले, हे रास को जानने वाले, हे ज्ञानियो के प्रिय, हे सर्वनाथ, हे महातेजस्वी सभ्य जनो के हृदय में स्थित रत्न रूप धन, हे कनक के छत्र वाले, हे आगमरूपी श्रीसूर्य द्वारा ब्रह्मा से लेकर नाना भूमियो तक का नियमन करने वाले, हे महान् उपवन वाले, हे सुमन्त्र के स्वामी, हे धनियो के प्रभु, आप हम लोगों की रक्षा करते हैं ।

४३. मेरुबन्धः

| | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | | | | | | | | | | | | र | | | | | | | | | | | | |
| | | | | | | | | | | | | घु | | | | | | | | | | | | |
| | | | | | | | | | | | | प | | | | | | | | | | | | |
| | | | | | | | | | | | | ति | | | | | | | | | | | | |
| | | | | | | | | | | | | र | | | | | | | | | | | | |
| | | | | | | | | | नृ | प | ति | व | र | कु | ध | | | | | | | | | |
| | | | | | | | | श | मु | ख | द | म | न | ज | य | सि | | | | | | | | |
| | | | | | | | दि | त | स | म | भि | म | त | ग | ह | न | द | | | | | | | |
| | | | | | | पु | रु | त | र | म | ह | क | लि | त | ल | लि | त | मु | | | | | | |
| | | | | | कृ | त | ज | न | क | ज | नि | त | त | शु | भ | प | रि | ण | य | | | | | |
| | | | | ख | प | न | र | प | ति | स | द | सि | ज | न | क | ब | हु | सु | ख | द | | | | |
| | | | य | प | र | म | ध | न | नि | खि | ल | दु | र | ह | र | ण | सु | नि | व | र | म | | | |
| | | न | य | न | श | श | ध | र | स | क | ल | ज | म | नृ | प | ति | द | श | र | थ | हृ | द | | |
| | म | ल | म | धु | प | नि | ज | ज | न | शि | व | क | र | सु | वि | सु | र | वि | ट | प | भ्र | म | ध | |
| त | डि | दु | प | म | व | स | न | र | घु | कु | ल | प्र | म | व | गि | रि | श | हृ | द | य | स | र | स | क |

विकसदसितकमलवरतनुधर । तडिदुपमवसन रघुकुलविभव ॥
गिरिशहृदयसरसकमलमधुप । निजजनशिवकर भुवि सुरविटप ॥
अवधनयनशशधर सकलसम । नृपतिदशरथहृदयपरमधन ॥
निखिलदरहरण मुनिवरमखप । नरपतिसदसि जनकबहुसुखद ॥
कृतजनकजनिततशुभपरिणय । पुरुतरमहकलितललितमुदित ॥
सममिमत गहनदशमुखदलन । जयसि नृपतिवर कुधरतनुधर ॥

मेरुबन्धलक्षणम्—

पञ्चविंशतिकोष्ठेषु गच्छेदुपरि मध्यतः ।
अनुलोम्ना तथा धीरो द्वौ द्वौ न्यूनौ विधाय च ।
मेलयेच्च शिखाभागे मेरुबन्धेऽत्र नूतने ॥

(चित्रबन्धकाव्यम् पृ० ४५)

व्याख्या—हे विकसदसितकमलवरतनुधर विकसन्नीलसरोरुहविग्रह, हे तडिदुपमवसन विद्युद्भासुरपीताम्बरधारिन्, हे रघुकुलविभव रघुवशविभूते, हे गिरिशहृदयसरसकमलमधुप शङ्करचित्तरसवद्राजीवबासिचञ्चरीक, हे निजजनशिवकर स्वजनकल्याणकारिन्, भुवि सुरविटप पृथिव्या कल्पवृक्ष, हे अवधनयनशशधर अयोध्यावासिनेत्रसुधाकर, हे सकलसम समस्तसम, हे नृपतिदशरथहृदयपरमधन दशरथस्वान्तसर्वस्व, हे निखिलदरहरण सकलभयभञ्जक, हे मुनिवरमखप विश्वामित्रयज्ञपालक, हे नरपतिसदसि नृपसमाजे स्वयम्वरे, जनकबहुसुखद अजगव धनुर्भङ्क्त्वा जनककृतकृत्यकारिन्, हे कृतजनकजनिततशुभपरिणय जानकीपाणिग्रहणकारक, हे पुरुतरमहकलितललितमुदित परममहोत्सवमुदित, हे सममिमत समभीष्ट, हे गहनदशमुखदलन रावणसंहारक, हे नृपतिवर नरेश्वरेश्वर, हे कुधरतनुधर धराधरशरीरधर, त्वं जयसि सर्वोत्कर्षेण वर्तसे ।

श्लिष्टः—"विकसदसितकमलवरतनुधर" ।

हे खिलते हुए नील कमल के समान शरीर वाले, हे विद्युत् की भाँति भासुर वस्त्र वाले, हे रघुकुल के ऐश्वर्य, हे शिव जी के हृदय के सरस कमल के भ्रमर, हे अपने जनो के कल्याण करने वाले, हे पृथिवी में कल्पवृक्ष, हे अयोध्यावासियो के नेत्रो के लिए चन्द्रमा, हे सबो पर समान भाव वाले, हे दशरथ जी के हृदय के सर्वस्व, हे सभी भयो को दूर कर देने वाले, हे विश्वामित्र जी के यज्ञ की रक्षा करने वाले, हे स्वयवर में जनक जी को बहुत सुख देने वाले, हे जानकी का पाणिग्रहण करने वाले, हे विविध महोत्सवो से प्रसन्न, हे सममिमत, हे रावण को मारने वाले, हे नृपतिया में श्रेष्ठ, हे पर्वत को धारण करने वाले, आप की जय हो ।



४४. वृक्षबन्धः




रामः कामद्रुमः पाल
कामदामतिमन्मूलः स

वृक्षबन्धलक्षणम्ः—

उपरिष्टात्तिरोभागादधो 'मध्यात्तु मध्यके।
एवं क्रमैः पुनर्मध्ये विरमेत्तरुसंज्ञके॥

(चित्रबन्धकाव्यम्, पृ० ५२)

वृक्ष-संज्ञक बन्ध में क्रमश. ऊपर से, तिरोभाग से और अधोभाग से मध्य में आकर पुनः इस क्रम से (शिखर के) मध्य में विराम प्राप्त करे।

व्याख्या—कामद्रुमः कल्वृक्ष., कर्मधर्मसुमङ्गलः कर्मधर्माभ्या सुमङ्गलरूप कामदामतिसन्मूलः कामदा या मति आ समन्तात् तच्छालिना मूलरूप', सामदामसुमण्डलः सामदामनी सुमण्डलं यस्य स., रामः, पालः पालको वर्तत इति शेषः।

कल्पवृक्ष, कर्म-धर्म द्वारा मङ्गलरूप, इच्छाओं की समग्रतः पूर्ति करने वाली बुद्धि से युक्तजनो के मूलरूप, साम और दाम से युक्त भगवान राम हमारे रक्षक है।



४४. वृक्षबन्धः



रामः कामद्रुमः पालः कर्मधर्मसुमङ्गलः ।
कामदामतिमन्मूलः सामदामसुमण्डलः ॥

वृक्षबन्धलक्षणम् :—

उपरिष्टात्तिरोभागादधो मध्यात्तु मध्यके ।
एवं क्रमैः पुनर्मध्ये विरमेत्तरुसंज्ञके ॥

(चित्रबन्धकाव्यम्, पृ० ५२)

वृक्ष-संज्ञक बन्ध में क्रमशः ऊपर से, तिरोभाग से और अधोभाग से मध्य में आकर पुनः इस क्रम से (शिखर के) मध्य में विराम प्राप्त करे।

व्याख्या—कामद्रुमः कल्पवृक्षः, कर्मधर्मसुमङ्गलः कर्मधर्माभ्यां सुमङ्गलरूपः कामदामतिमन्मूलः कामदा या मतिः आ समन्तात् तच्छालिना मूलरूपः, सामदामसुमण्डलः सामदामनी सुमण्डलं यस्य सः, रामः, पालः पालको वर्तते इति शेषः।

कल्पवृक्ष, कर्म-धर्म द्वारा मङ्गलरूप, इच्छाओं की समग्रतः पूर्ति करने वाली बुद्धि से युक्तजनों के मूलरूप, साम और दाम से युक्त भगवान राम हमारे रक्षक हैं।



## ४५. द्विचतुष्कबन्धः




कृष्णकान्ता लसन्माला राधा लोकैकसुन्दरी ।
कृतिकामलता माऽवेद् रामालोला कलोदया ॥

द्विचतुष्कचक्रबन्धलक्षणम्—

इह शिखरसन्धिमालां बिभृयादर्धं समाश्रितैर्वर्णैः।
द्विचतुष्कचक्रबन्धे नेमिविधौ चापरं भ्रमयेत्॥

(सर० क०, चित्रप्र० पृ० ४३)

इस द्विचतुष्कबन्ध में शिखर-माला और सन्धि माला को पूर्वार्ध के वर्णों से भर दे तथा उत्तरार्ध को नेमि में घुमा दे।

व्याख्या—कृष्णकान्ता कृष्णप्रिया, लसन्माला लसन्ती माला यस्या सा, लोकैकसुन्दरी त्रिभुवनैककमनीया, कृतिकामलता सुकृतिजनमनोरथदात्री सुरद्रुमवल्ली, रामालोला रामासु नारीषु लोला चञ्चला, कलोदया कलाभि चतुष्षष्टिकलाभिरुदयो यस्या सा, राधा, मा मा अवेद् रक्षेत्।

श्रीकृष्ण की प्रिया, शोभित होती हुई माला वाली, ससार की एकमात्र सुन्दरी, सुकृती जनो के मनोरथ पूर्ण करने वाली कल्पवृक्ष की लता, नारियो में चञ्चला, चौंसठ कलाओ से युक्त राधा मेरी रक्षा करें।



## ४६. द्विशृङ्गाटकबन्धः



सरागमञ्जुरूपोपमाकर विसराग्रग ।
गतिमञ्जुं पितः पोत मां माहि वरतापस ॥

द्विशृङ्गाटकबन्धलक्षणम्—

शृङ्गाद् ग्रन्थिं पुनः शृङ्गं ग्रन्थेः शृङ्गं व्रजेदिति ।
द्विशृङ्गाटकबन्धेऽस्मिन्नेमिः शेषाक्षरैर्भवेत् ॥

(सर० क०, चित्रप्र० पृ० ४४)

इस द्विशृङ्गाटकबन्ध में शृङ्ग से ग्रन्थि में, पुन ग्रन्थि से शृङ्ग में चले तथा शेष अक्षरों से नेमि होती है।

व्याख्या—हे सराग सानुराग, मयीति शेष । हे मञ्जुरूपोपमाकर मञ्जुरूपाणामुपमानामाकर खने, हे विसराग्रग विसरे समूहे सह अग्रे गच्छतीति तत्सम्बुद्धौ, हे पोत ससारसमुद्रतारक, हे वरतापस श्रेष्ठतापस, हे पित श्रीविश्वेश्वर पाठक, गतिमञ्जु मां रामरूप माहि मापय। महास्निग्ध. शुभोपमायोग्य, सज्जनाग्रगण्य, स्वजनतारक, पयोव्रत-चान्द्रायण-व्रत-चातुर्मास्यव्रत-पीण्याकव्रतोपासक, कविवर, काशीनिवासी, ईश्वरानुरागी च मम पिताऽऽसीत् ।

अत्र ग्रन्थिवर्णे 'रामरूपकवि' इति कविनामाङ्कवर्णावली लभ्यते ।

हे (मुझपर) सानुराग रहने वाले, हे मञ्जु उपमाओ के आकर, हे समूह के आगे चलने वाले, हे (ससार समुद्र के पार करने वाले) जलयान, हे श्रेष्ठ तापस, हे पिता (श्री विश्वेश्वर पाठक) मुझ गतिमञ्जु रामरूप पर ध्यान दीजिए।



## ४७. त्रिविडितबन्धः




पातु मा देव सर्वत्र तुङ्ग मा बल सत्रपाः ।
पार्थिवाङ्ग जगद्देह शरण्य पार्वतीकृपा ॥

## ४८. ढालबन्धः




कमलकोमल हे जनपालक
कलवचो दशयान सुबालक ।
कनकभूषण दानवपावक
कथय मां शिवमानसहंसक ॥

ढालबन्धलक्षणम्—

मध्याद् गच्छेत्पुनर्मध्ये मध्यान्मध्ये पुनस्तथा ।
इमां शैलीं कविश्रेष्ठ ढालबन्धे वदेद् बुधः ॥

(चित्रबन्धकाव्यम्, पृ० ३९)

हे कविश्रेष्ठ, मध्य से चलकर मध्य में, पुन मध्य से चलकर मध्य में विराम प्राप्त हो, इस शैली को बुधजन ढालबन्ध में कहते हैं ।

व्याख्या—(सीताया वचनम्—) हे कमलकोमल, हे जनपालक भक्तजनपालक, हे कलवचः मधुरवचन, दशयानसुबालक दशरथतनय, हे कनकभूषण, हे दानवपावक, हे शिवमानसहंसक, मा सीता लक्ष्मी कथय ।

(सीताजी का वचन) हे कमल-सदृश कोमल, हे भक्तजनों के रक्षक, हे मधुर वचन बोलने वाले, हे दशरथ के सुभग बालक, हे सुवर्ण को भूषित करने वाले, हे दानवों के नाशक, हे शिवजी के मानस (रूपी मानसरोवर) के हंस, मुझ सीता को लक्ष्मी कहिए ।



४६. शरयन्त्रबन्धः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ह १ | र १८ | नं १९ | द ४ | न ५ | मा २२ | व्या ७ | घ २४ |
| ग ९ | जा २६ | न ११ | न २८ | वि १३ | ना ३० | य १५ | क ३२ |
| व १७ | र २ | नं ३ | द २० | य २१ | मा ६ | म २३ | घ ८ |
| प्र २५ | जा १० | ध २७ | न १२ | द २९ | ना १४ | य ३१ | क १६ |

हरनन्दन मान्याद्य गजानन विनायक ।
वर नन्दय मामद्य प्रजाधनद नायक ॥

शरयन्त्रबन्धलक्षणम्—

चतुर्ष्वपि च पादेषु पङ्क्तिशो लिखितेष्विह ।
आदेरादेस्तुरङ्गस्य पादैः पादः समाप्यते ॥
(सर० क० चित्रप्र० पृ० २४)

यहाँ पक्तिश लिखित चारो पादो में आदि-आदि के क्रम से घोडे के पैर की (ढाई कोष्ठ तक) चालो से पाद की समाप्ति होती है ।

व्याख्या—हे हरनन्दन शिवपुत्र, हे मान्याद्य मान्येषु आद्य अग्रगण्य, हे गजानन गजमुख, वर श्रेष्ठ, प्रजाधनद, नायक नेत, विनायक गणेश, मा रामरूप, अद्य, नन्दय आनन्दय ।

हे शिवजी के पुत्र, हे मान्यजनो में अग्रगण्य, हे गजानन, हे श्रेष्ठ, हे प्रजाओ को धन देने वाले, हे नायक, हे विनायक, मुझ रामरूप को आज आनन्दित कीजिए ।



५० तुरङ्गपदबन्धः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| स १ | र ३० | ला ९ | रा २० | स ३ | भा २४ | ते ११ | ता २६ |
| क १६ | धा १९ | र २ | स २९ | कृ १० | पा २७ | क ४ | रा २३ |
| स्व ३१ | र्णा ८ | स १७ | ना १४ | क २१ | ला ६ | गी २५ | ता १२ |
| भा १८ | य १५ | ती ३२ | भ्य ७ | तु २८ | त १३ | प्र २२ | म ५ |

सरला रासभा तेऽस्ताक वा रसकृपाकरा ।
स्वर्णासना कलागीताभायतीभ्य तु तप्रम ॥
सरसकमलाभ्यर्णा लाकृतेस्तात नायक ।
सभाधारा कप्रराभा गीता पातु सरस्वती ॥

तुरङ्गपदबन्धलक्षणम्—

क्रमात्पादचतुष्केऽस्य पङ्क्तिशः परिलेखिते।
तुरङ्गपदयानेन श्लोकोऽन्य उपजायते॥
(सर० क० चित्रप्र०, पृ० २०)

पंक्ति के अनुसार क्रम से लिखे गए इसके चारो पादो में घोडे की चाल (ढाई अक्षर) से दूसरा श्लोक निकल आता है।

व्याख्या—(युग्मकम्) काचित्सखी रात्रौ चौर्यकर्मरत कृष्ण दृष्ट्वोवाच—हे अस्ताक अस्त अक.दुःख यस्य तत्सम्बुद्धौ, हे कलागीताभायतीभ्य कलया गीता आभाया आयति प्रभाव तया इभ्यो धनी तत्सम्बुद्धौ हे तप्रम तस्य चौरस्य प्रमा यथार्थज्ञानं यस्मिन् तत्सम्बुद्धौ, हे तात, हे नायक स्वामिन्, 'लाकृते ।'लृ' इवाकृतिर्यस्य ते तव सरला, रासभा रासे भातीति, धा धारणशीला, रसकृपाकरा, स्वर्णासना, सरसकमलाम्यर्णा सरसा कमला लक्ष्मीरभ्यर्णे यस्या सा, सभाधारा, कप्ररा क सुख प्ररातीति, भा भातीति, गीता जनै प्रशसिता, सरस्वती पातु।

किसी सखी का वचन रात्रि में अपने गृह में चोरी करते हुए कृष्ण को देखकर—

हे दुःख से रहित, हे कला से गाये गए प्रभाव के कारण, धनी, हे चोर का यथार्थ ज्ञान रखने वाले, हे तात, हे नायक, हे 'लृ' की भाँति आकृति वाले तुम्हारी सरस्वती (वाणी) हमारी रक्षा करे, जो सरला, रास में शोभने वाली, धारणशीला, रस एव कृपा की खनि सरस लक्ष्मी के समीप रहने वाली, सभा का आधार, सुख देने वाली, शोभित, होने वाली एव लोगो से प्रशसित है।



## ५१. कमण्डलुबन्धः



अयि द्विजजनाधीशशयावास मनोरम ।
अशेषतीर्थवाधाम महःपुञ्ज जयं सृज ॥

कमण्डलुबन्धलक्षणम्—

स्वेष्टं कोष्ठेषु विन्यस्य मध्यतः परितः सरेत् ।
अधोऽधस्तान्मुखे चैव नव्यबन्धे कमण्डलौ ॥

(चित्रबन्धकाव्यम्, पृ० २५)

इस कमण्डलु के नूतन बन्ध में अपने इष्ट को कोष्ठो (स्थानो) म विन्यस्त करके, मध्य से चारों ओर सरण करे, पुन. नीचे मुख तक सरण करे ।

व्याख्या—अयि, द्विजजनाधीशशयावास हे ब्राह्मणेश्वरहस्तनिवासकारिन्, हे मनोरम, हे अशेषतीर्थवाधाम निखिलतीर्थजलस्थान, महःपुञ्ज तेजोराशे, कमण्डलो ! जयं कल्याण सृज कुरु ।

श्लिष्टे :—"अज शमज"

हे अज हे ब्रह्मन्, शं कल्याण अज प्राप्नुहि ।

हे श्रेष्ठ ब्राह्मण-जनो के हाथ में निवास करने वाले, हे मनोरम, हे अशेष तीर्थों के जल के गृह, हे तेज के राशि ! कमण्डलु ! कल्याण कीजिए ।



## ५२. सुवर्णचत्वरबन्धः



हे देवदेव मम हे शिवदेह देहे
हे देहलीगणपपालक पाशदे हे।
हे देशकालगतिविच्च सुमोददे हे
हेदे दयस्व गिरिजे शिवदेवदेहे ॥

सुवर्णचत्वरबन्धलक्षणम्—

मध्यतः कोणमागच्छेन्नेमौ कोणात्तु मस्तके।
अनुलोमविलोमाभ्यां बन्धे चत्वरसंज्ञके॥

(चित्रबन्धकाव्यम्, पृ० २३)

मध्य से कोण में पहुँचे, फिर नेमि में कोण से होते हुए मस्तक में अनुलोम विलोम के अनुसार चत्वर-संज्ञक बन्ध में चले।

व्याख्या—(अर्धनारीश्वरप्रार्थना)—हे देवदेव, इह मम, देहे, हे शिवद, हे देहलीगणपपालक काशीपञ्चक्रोशे देहलीविनायको वर्तते तस्य पालकस्तत्सम्बुद्धौ, हे पाशदे पाश द्यतीति पाशखण्डिनि, हे देशकालगतिविद्, हे सुमोददे, हेदे हश्च ईश्च हयौ ते ददातीति हेदा तत्सम्बोधने हस्तिलक्ष्मीदे, "ह कोपे वारणे हश्च लक्ष्मीरीकार उच्यते' इत्येकाक्षरी। हे शिवदेवदेहे शिवदेवो देहो यस्या सा तत्सम्बोधने शिववामाङ्गे, हे गिरिजे, दयस्व दया कुरु। "वटे वटे वैश्रवणश्चत्वरे चत्वरे शिव। पर्वते पर्वते राम सर्वत्र मधुसूदन।" इत्येतदनुसार सुवर्णचत्वरेऽर्धनारीश्वरो विराजत इति निर्दिष्टम्।

हे देवदेव, हे देहली–गणेश के पालक, हे यम के पाश का खण्डन करनेवाली, हे देश और काल की गति जानने वाली, हे मोददात्री, हे शिव के वामाङ्ग में रहने वाली, हे गज और लक्ष्मी देने वाली, हे पार्वती, दया कीजिए।

## ५३. गजबन्धः




कपर्दनिर्झरस्नान जन्मकर्तृद्विहर्षप ।
नम्यपद्धूलिसुस्नान कलाकर्णगकेतकात् ॥
द्वितीयदन्तशोभाभृत् पटो स्कन्दकजिघ्रक ।
कनकद्विप कल्याणं आदिपूज्य परं कुरु ॥

गजबन्धलक्षणम्—

> विन्यस्येष्टं शुण्डतश्च द्वितीयेष्टात् पदे पदे।
> पुनरिष्टं गृहीत्वैव गच्छेत् पुच्छे कविप्रियः॥
>
> (चित्रबन्धकाव्यम्, पृ० ४)

कवि का प्रिय शुण्ड से इष्ट अक्षर का विन्यास करके दूसरे (फिर क्रमश तीसरे, चौथे पाचवें) इष्ट अक्षर से (गज के) प्रत्येक पैर में गमन करते हुए पुन इष्ट को ग्रहण करके ही पुच्छ में पहुँचे।

व्याख्या—हे कपर्दनिर्झरस्नान कपर्दस्य शिवजटाजूटस्य निर्झरेण स्नान यस्य तत्सम्बुद्धौ, हे जन्मकर्तृद्विहर्षप जन्मकर्त्रो पित्रोर्द्वौ हर्षौ पातीति तत्सम्बुद्धौ हे नम्यपदधूलिसुस्नान नम्यौ पितरौ नम्या पूर्वजा वा तयोस्तेषा वा पदधूले शोभन स्नान यस्य तत्सम्बुद्धौ, स्नानानन्तर धूलिस्नान हस्तिस्वभाव, हे कलाकर्णगकेतकात् कलानाम्न्या मातु सख्या कर्णस्थितकेतकात् हे द्वितीयदन्तशोभाभृत्, हे पटो समर्थ, हे स्कन्दकजिघ्रक स्कन्दशिरसा जिघ्रक, हे कनकद्विप, हे आदिपूज्य, पर उत्कृष्ट कल्याण कुरु। बालक्रीडावलोकनेनैको हर्ष, बालेऽपि गणेशे श्रेष्ठ-धूलिवदन अनुजस्य आयुर्वर्द्धनकरं शिवोजिघ्रणमित्यादिसूक्ष्मवस्त्ववलोकनेन द्विहर्ष। पूर्वं चत्वरबन्ध, ततो गजबन्ध। अत सुवर्णचत्वरस्थपित्रोर्धूलिस्नानेन कनकद्विपो गणेशो जात। केतकाद् द्विदन्तोऽपूर्ववेषो बभूव।

हे शिवजी के जटाजूट में स्नान करने वाले, हे पिता माता के हर्ष की रक्षा करने वाले, हे नम्य जनो की पदधूलि में स्नान करने वाले, हे कला नाम की माता की सखी के कान पर स्थित केतक से दूसरे दात की शोभा धारण करने वाले हे समर्थ, हे कार्तिकेय के शिर को सूघने वाले, हे कनकद्विप, हे आदि में पूज्य गणेशजी, आप उत्कृष्ट कल्याण कीजिए।



## ५४. नन्दिबन्धः



नयनानन्ददातर् हे शिवाङ्घ्रौ शिरसा नत ।
दयया दरसंहर्तर् लसद्वल्लभ हे अज ।
कैलासगौर शं देहि नन्दिन् शिलादबालक ॥

नन्दिबन्धलक्षणम्—

चरणेषु समाप्यन्ते चत्वारश्चरणाः क्रमात् ।
पुनः पुच्छाग्रतो गच्छेन्नन्दिबन्धे मुखाग्रतः ॥

(स्वनिर्मितम्)

(छन्द के) चारो चरण (नन्दी के) चारो चरणो में समाप्त होते हैं और पुन पुच्छ के अग्रभाग से नन्दिबन्ध में मुख के अग्रभाग तक जाए ।

व्याख्या—हे नयनानन्ददात नेत्रहर्षद, हे शिवाङ्घ्रौ शिरसा नत शिवचरणे नतमस्तक, हे दयया दरसहर्त स्वकृपया लोकभयनाशक, हे लसद्वल्लभ लसन् विराजमान वल्लभ प्रिय शिवो यस्मिन् तत्सम्बुद्धौ, हे अज स्वत उत्पन्न, हे कैलासगौर कैलासवद्धवल, हे शिलादबालक शिलादाख्यमुनिपुत्र, हे नन्दिन्, त्व श कल्याण कुरु ।

हे नेत्र को आनन्दित करने वाले, हे शिवजी के चरण में सिर से झुके हुए, हे दया से भय का विनाश करने वाले, हे शोभित होते हुए (शिव जी के) प्रिय, हे अज, हे कैलास की भाँति गौर, हे शिलाद ऋषि के बालक, हे नन्दिन्, कल्याण कीजिए ।

[ पौराणिक कथा के अनुसार किसी शिलाद नाम के ऋषि ने शिव की आराधना करके शिवसदृश पुत्र की याचना की । प्रसन्न होकर शिवजी ने कहा—मैं तुम्हारा अयोनिज पुत्र होऊँगा, जिसे देखकर तुम्हारे आनन्द हो उसे ही अपना पुत्र समझ लो । मार्ग में जाते हुए उस मुनि ने गौ के बछड़े को देख कर परम आनन्द का अनुभव किया और उसे अङ्क में उठा कर घर चले गए । पति के अङ्क में पुत्र रूप वत्स को देख कर उनकी पत्नी के स्तनों से दूध क्षरित होने लगा । मुनि और मुनिपत्नी ने उस वत्स का नाम 'नन्दी' रखा । वह नन्दी भी शिव की आराधना करके शिवका वाहन हो गया ।]

## ५५. फणिबन्धः



धृत्वा हारं वराहिं, नटसि शिव शिव, त्वं यदा विश्वरचिन् ।
सुज्योतिर्मद्मणिघ्नं, करगमडमरुं, नादिनं वादयन् यत् ॥
साहस्रै रत्नदीपैस्, तिमिरवरगलः, कुध्ननीराजना तत् ।
सिद्धोदन्तावितोऽहं, रतिपतिवसुजादीप्तिमन्तं लभै त्वा ॥

फणिबन्धलक्षणम्—

पुच्छात्परिसरन् गच्छेद् व्यावृत्तिं श्लिष्टसंज्ञके।
विरमेच्च गले धीरो बन्धेऽत्र फणिसंज्ञके॥

(चित्रबन्धकाव्यम्, पृ० ३६)

धीर इस फणिसंज्ञक बन्ध में श्लिष्ट में आवृत्ति करते हुए पुच्छ से परिसरण करे और गल प्रदेश में विराम करे।

व्याख्या—हे शिव कल्याणरूप, हे शिव महादेव, विश्वरक्षिन् सुज्योतिर्मद्मणिध्र सुष्ठुज्योतिर्मतो मणीन् धरतीति तृ वराहि वरोऽहि सर्पो यस्मिन् त, हार नागेन्द्रमालिका, धृत्वा, तिमिरवरगल· तिमिर इव वरो गलो यस्य स, नादिन शब्दायमान करगमडमरु वर गच्छतीति करग करगो मो बन्धन यस्य स करगमश्चासौ डमरुस्त, वादयन्, यत् त्व यदा नटसि नृत्य करो ("बन्धने म प्रकीर्तित' इत्येकाक्षरी) तदा तिमिरवरगलै· (अर्थवशाद् विभक्तेरपि विपरिणाम·) तिमिरवरा गले येषा तै साहस्रै रत्नदीपै कुध्रनीराजना श्वेतवराहस्य भगवत पर्वताना व नीराजना आरार्तिक्यम्। सिद्धोदन्तावित· सिद्धैरुदन्तैर्भवद्वृत्तान्तै अवित रक्षितोऽहं रतिपतिवसुजादीप्तिमन्त रतिपते कामस्य वसु प्रकाशस्तस्मात् आ समन्तात् जाता दीप्ति साऽस्यास्तीति त, त्वा त्वा लभै। शिव स्वविवाहसमये कृपादृष्ट्या काम जीवयामासेति पौराणिका। स्रग्धरावृत्तम्।

हे कल्याणरूप, हे महादेव, विश्व की रक्षा करने वाले, सुन्दर ज्योति वाले श्रेष्ठ सर्प की माला को धारण करके तिमिर की भांति कण्ठ वाले, (सुन्दर) शब्द करने वाले हाथ में स्थित डमरू को बजाते हुए आप जब नृत्य करते है तब कण्ठ में अन्धकार से युक्त हजारो रत्नदीपो से (वह नृत्य) श्वेतवराह भगवान् की नीराजना लगता है। आपके सिद्ध वृत्तान्तो से रक्षित मै काम के प्रकाशन से उत्पन्न दीप्ति वाले आपको प्राप्त करू। (शिवजी ने अपने विवाह के समय कामदेव को जीवित किया था)।

# प्रथमोऽनुबन्धः

( ग्रन्थकृत्पण्डितरामरूपपाठकविरचितलघुकाव्यानि )

## १. भक्तकण्णपचरितम्

भीमोपाधिः कण्णपो भिल्लराजो मध्यारण्ये पर्वताग्रे द्रुमूले ।
शैवं लिङ्गं नेत्रनासास्यरम्यं पत्रैः पुष्पैः पूजितं संददर्श ॥१॥

दिव्यैः पुण्यैः पूर्वजन्मार्जितैश्च दृष्ट्वा शम्भुं प्रेमपूर्णो बभूव ।
तस्मात् कालात् त्यक्तहिंसादिकर्मा भक्त्या नित्यं पूजयामास देवम् ॥२॥

अनन्यभक्तेर्निजसेवकस्य ख्यातिं विधातुं भुवनेषु भक्तिम् ।
स्वदक्षनेत्राद् रुधिरप्रवाहं किलैकदोग्रः प्रकटीचकार ॥३॥

शिवमन्त्रपदोज्ज्वलाननो बहुरुद्राक्षविभूतिभूषणः ।
सजलाक्षतपुष्पचन्दनोत्तमनैवेद्यफलादि-पात्रभृत् ॥४॥

शिवमर्चितुमार्तरक्षकं सुसमागच्छति यावदेव वै ।
दृशि रक्तमवेक्ष्य 'हा' रुदन् पतितो मूर्च्छति तावदेव सः ॥५॥

अवलम्ब्य च चेतनां स्वयं विललापाकुलमानसेन्द्रियः ।
अयि नाथ तवेक्षणे क्षतिमकरोत् को ह्यनुपस्थिते मयि ॥६॥

गहनादुत कुत्र गच्छति सुसमन्वेषणतत्परे मयि ।
भुवि तस्य महापकारिणो नयनद्वन्द्वहरोऽस्मि साम्प्रतम् ॥७॥

इति शोकयुतं वदन् बहु धृतकोदण्डशरो महागतिः ।
सकलं गहनं परिभ्रमन् न हि लेभे प्रतिकूलमात्मनः ॥८॥

स पुनः शिवपार्श्वमागतो जलसम्मार्जनभस्मलेपने ।
द्रुलतारसतैलसेचनं बहुयत्नं कृतवान् भवप्रियः ॥९॥

न बभूव च रक्तरोधनं सकला यत्नकला च निष्फला ।
अवरुद्धवचाः सुकम्पवान सजलाक्षोऽतिशुचा रुरोद च ॥१०॥

अयि नाथ जगत्त्रयैकभृत् तव नेत्रं रुधिरौघवर्ष्यहो ।
मम यत्नकला च निष्फला न निरुद्धं रुधिरं कथं भवेत् ॥११॥

जलभस्म वनस्पते रसः खलु तैलं दमुखाक्षिजो रसः ।
इति वस्तु हि रक्तरोधकं भिषजो नित्यमिदं श्रुतं मया ॥१२॥

अयि देव तवेक्षणं पुनर्नवसद्रत्नसरोज-सुन्दरम् ।
न भविष्यति पूर्ववत् किमु मम हे दैवत हा करोमि किम् ॥१३॥

अयि मानस नेत्ररोगिणो नयनद्वन्द्वनयनं किमौषधम् ।
इति संशय आगते हृदि सहसोत्पाट्य निजाक्ष्ययोजयत् ॥१४॥

नवरत्ननिभ सरोजभ शिवनेत्र प्रविलोक्य पूर्ववत् ।
मुदित सुखभागशोकभाक् शिवभक्तो निजगाद कण्णप ॥१५॥

असृजो लवलेशवर्जित नवराजीवनिभ सुरत्नभम् ।
तव नाथ विलोचन वर कुरुते मे सुखमद्भुत प्रभो ॥१६॥

शिव हे नयन मनोहर परिपश्यन् बहुभाग्यभागहम् ।
कवयो भुवनेऽच्युतोपम कथयिष्यन्ति मुदैव मामहो ॥१७॥

सुखमित्यनुवेलमात्मना कथयन्नेव विलोक्य वामत ।
नयनादपि रक्तवर्षमित्यभवद् रुद्धगतिश्च रुद्धवाक् ॥१८॥

अवलम्ब्य च धीरता परा सुविचार कृतवान् स कण्णप ।
अपर मम नेत्रमौषध तदिद सम्प्रति योजयाम्यहम् ॥१९॥

शिवनाम वदन् दृढव्रत शिवनेत्रे ह्यवलम्ब्य तर्जनीम् ।
सुशरेण च यावदीक्षण प्रकटोऽभूदथ भक्तवत्सल ॥२०॥

श्रीगङ्गाधरममृताशुकान्तिकान्त सर्पाणा मणिगणभाग्जटाकलापम् ।
त्रिस्रोतोऽधिकरुचिरत्रिपुण्ड्रपङ्क्ति फुल्लाब्जस्मितवदन दयार्द्रनेत्रम् ॥२१॥

बिम्बोष्ठ गरलधरानुज्ञान्तकण्ठ रुद्राक्षोरगकटकाङ्गदोपवीतम् ।
डमडमरुडमरुधर निशूलहस्त स्पर्शन्त वरदकरेण तस्य भालम् ॥२२॥

व्याघ्रत्वङ्नवपरिधानरम्यमध्य भक्तान्त करणनिवासिपादपद्मम् ।
भिल्लेश सपदि निमेषवर्जिताभ्या नेत्राभ्या बहुशिवद शिव ददर्श ॥२३॥

कर्तार त्रिभुवनसृष्टिपालनान्त सर्वव्यापिनमजमद्वितीयरूपम् ।
आविर्भूतमिह हि भक्तवत्सलाग्र्य सम्पश्यन् स च निजजन्म जन्म मेने ॥२४॥

देवेन्द्रालिकमणिरश्मिवा सुसिक्तौ शर्वाणीकरकमलार्चितौ सदैव ।
स्पृष्ट्वाऽङ्घ्री मुनिजनमानसाब्जहसौ भिल्लेश स च परिपूर्णकाम आसीत् ॥२५॥

भूतेशाद् विबुधजनै प्रशसनीया मिष्टेष्टा गरलगलाद् भवाद् भयघ्नी ।
सौम्योग्रात् पितृवनवासित पवित्रा जाताऽजाद् वरगुणयुक् च निर्गुणाद् वाक् ॥२६॥

मत्स्नेहिन् व्रतदृढ कण्णपाख्यभिल्ल त्वद्भक्त्या सततमह पर प्रसन्न ।
भक्ताना किमपि जगत्सु नास्त्यलभ्य त्वाभीष्ट वरय वर सुखैकहेतुम् ॥२७॥

उत्पन्ना शिववदनामृताशुबिम्बात् सस्नेह वचनसुधा पिबन्नतृप्त ।
निर्बाध सुरसवती सदा प्रपातुम् स्वावज्ञ सहवसति स सययाचे ॥२८॥

श्रुत्वा वचो मुग्धविचारपूर्ण हसन् महेश करुणासमुद्र ।
तथास्तु वाणीमनुवेलमुक्त्वा चक्रे स्ववास हृदये च तस्य ॥२९॥

शम्भु स्वर्णमुखीनदीवरतटे श्रीकालहस्तीश्वर-
स्तन्नामापि च वायुलिङ्गमपर ख्यात सदा भूतले ।
दिव्या कण्णपभिल्लमूर्तिरधुना तन्मन्दिरे वर्तते
हे हे भक्तजना मया सह कदा दृष्ट्वा सुख लप्स्यथ ॥३०॥

## २. एकाम्रेश्वरकथा

श्रीगङ्गाधरगुणरूपराशिमुग्धा स्वक्रीडानिकरवशीकृतेशचित्ता ।
फुल्लेन्दीवरवदना गिरीन्द्रपुत्री कैलासे वसति सदा शिवेन सार्धम् ॥१॥

सल्लीलास्मितवदना प्रतारणेच्छा मौनालीङ्गितविभवेन मौनभूया ।
साऽलक्ष्या पशुपतिमेकदा ह्युपेत्य पाणिभ्यां सपदि रुरोध लोचनानि ॥२॥

पाणिस्पर्शनहरिचन्दनद्रवेण सर्वज्ञो हिमगिरिकन्यकेति बुद्ध्वा ।
बाले हे मम हृदि वासिनि प्रिये हे अज्ञाते सपदि विमुञ्च लोचनानि ॥३॥

अथ गिरिश उवाच त्यक्तनेत्रां भवानीं मम नयनविकाशात् सूर्यचन्द्राग्निभाऽस्ति ।
क्षणमितमिह कालं कोटिवर्षं व्यतीतं प्रलयजमिव कष्टं जातमद्य त्रिलोक्याम् ॥४॥

गिरिवरवरकन्ये हे दयास्निग्धचित्ते सकलभुवनरक्षा जायते वै त्वदेव ।
बहुविधमभिजातं दु:खमद्य त्रिलोक्यां सपदि कुरु तपस्या प्राप्तदोषक्षयाय ॥५॥

कैलासरम्यशिखरे सहिता सखीभिर्लक्षणा स्मितमुखी वरचित्रवाक्या ।
सद्रत्नभूषणधरा धृतपीतवस्त्रा सा लीलया गिरिसुता शिवमारराध ॥६॥

कम्पानदीतटगताम्रतले निराली योगेश्वरी धृतजटा धृतमौनभावा ।
रुद्राक्षभूषणधरा सुकषायवस्त्रा सा शङ्करं गिरिसुता तपसाऽऽरराध ॥७॥

प्राणेश्वरं पतिमजं जगदेकपूज्यं कृत्वा सुसैकतमयं क्षितिरूपलिङ्गम् ।
बाह्यैश्च मानसभवैर्विविधोपचारैरानर्च भक्तिसहिता गिरिराजपुत्री ॥८॥

छायां चकार जलदः सति तीक्ष्णघर्मे सत्युत्थिते रजसि शीकरवृष्टिरासीत् ।
वृक्षाश्च पत्रकुसुमावचये विनम्राश्चेरुर्मृगाश्च परितो हृतवैरभावाः ॥९॥

वाता ववुः सुखकराः ककुभः प्रसन्ना वेद्यां प्रदक्षिणशिखो हविरादेदेऽग्निः ।
सर्वं बभूव शुभशंसि तदा त्रिलोक्यां लोकोदयाय तपसः फलमादिशद्वै ॥१०॥

वृष्टिं विनाऽपि वनभूर्ज्वलनः शशाम वृक्षा विनाऽपि सुरभिं फलपुष्पभाजः ।
सत्त्वेषु हीनमधिको न ततो बबाधे चित्रं बभूव बहु मातृतपःप्रभावात् ॥११॥

गन्धर्वकिन्नरमहोरगयक्षदेवा मातुः पदाम्बुरुहदर्शनलालसाढ्याः ।
लोकैरलक्षितदशा धृतभिल्लरूपा भक्त्या ददुर्जितसुधं फलकन्दमूलम् ॥१२॥

विद्यासमुद्रपरपारगता विनम्रा ज्ञानार्कदीप्तहृदया बहुशिष्ययुक्ताः ।
अध्येतुमीश्वरपदाम्बुरुहस्य भक्तिं गौर्याः पदाम्बुजयुगं सिषिवुर्मुनीन्द्राः ॥१३॥

### ग्रीष्मवर्णनम्

पार्श्वस्थिताद् स्थलजपद्मवनात् प्रफुल्लादुद्धूत उत्पलभवः प्रचुरः परागः ।
विष्वग् विवर्तित उमोपरि वात्यया वै छत्रस्य हाटकमयस्य दधार शोभाम् ॥१४॥

### वर्षावर्णनम्

विद्युत्त्रिशूलपरिदीप्ततनुं कदाचिच्चापान्वितं च गजचर्मवितानमब्दम् ।
पश्यञ्जलार्द्ररुचिरा निकषा भवानी नृत्यं चकार सुतरामिव नीलकण्ठः ॥१५॥

## शरद्वर्णनम्

फुल्लारविन्दगतचञ्चलखञ्जरीटा दृष्टा दृशा वितरतीष्टफलं नदी वै।
मन्दस्मिताननसुरम्यविशालनेत्रा गौरी स्मृता हृदि ददाति फलं जनेभ्य. ॥१६॥

गौर्यास्तदा सपदि दक्षिणवामभूमीजाते सुमारुतविलोलविकाशिकाशे।
पार्श्वस्थिते विमलचामरहस्तपद्मे रात्रिन्दिवं सिषिवतु किमु तां सुसख्यौ ॥१७॥

## हेमन्तवर्णनम्

सन्तापहीना नवपुष्पदन्ता शुभ्रान्नपूर्णां हिमभां विलोक्य।
सूर्यप्रभाकुन्दलतामहीवार्जाता इमा किं गिरिजासमाना ॥१८॥

## शिशिरवर्णनम्

लोध्रोऽन्तिके विकसितो निजवाहनोऽसौ सङ्गं जहौ न हि तपस्यपि किं मृगेन्द्र।
गौरी सुकेशकुसुमा फलिनी शिवेष्टा छाया ह्यजा प्रकटिता किमु पार्श्वदेशे ॥१९॥

## वसन्तवर्णनम्

छायानिषण्णसुरभिर्वररक्तपत्र पुष्पौघगन्धपरिलुब्धसुयाचकालि।
देवाङ्गनापरभृतापरिगीतकीर्तिर्गौर्यास्तरु सुरतरोस्तुलनाभिलाषी ॥२०॥

पद्मासने स्थिरतनुः स्थिरनेत्रपद्मा प्रेम्णा वरेण शिवपूजनसक्तचित्ता।
गौर्येकदा परमवेगवतीमकस्माद् नद्यां ददर्श जलवृद्धिमभूतपूर्वाम् ॥२१॥

दृष्ट्वा जलं प्रतिविशं चकितोरुचक्षुरुत्थाप्य लिङ्गमरमाशु पलायमाना।
रुद्धा जलैः सपदि रुद्धगति. सकम्पा साश्रु. सगद्गदवचाः स्मृतशम्भुशक्तिः ॥२२॥

स्वप्राणरक्षणविधावभिलापशून्या प्राणेशरक्षणविधावभिलाषपूर्णा।
लिङ्गं भवेन्न गलितं जलधारयेति दोर्भ्यां गृहीतहृदयेश्वरभूमिलिङ्गा ॥२३॥

हा हा महेश्वर कृपामय दीनबन्धो हा नाथ हा पशुपते जगदेकवीर।
अस्माज्जलात्सपदि रक्षक रक्षरक्षेत्येवं गिरीन्द्रतनया मुहुरालपन्ती ॥२४॥

सन्ताडितोभयतटैर्बहुश. कदाचिदावर्तसम्भ्रमभरैर्भ्रमिता कदाचित्।
लग्ना कदाचन तरौ विकला वहन्ती लिङ्गं जहौ न गिरिराजसुता तथापि ॥२५॥

स्नेहं दृढं स्वविषये परमं विलोक्य श्रीशङ्करः प्रकटितः करुणासमुद्र।
ऊचे वचो भयहरं मधुरं सुधाजिद् भूया प्रिये विगतभीर्न जलप्रवाह ॥२६॥

श्रुत्वैव प्रियवचन प्रफुल्लिताक्षी सम्प्राप्तं ह्यभिमुखमीश्वरं ददर्श।
कम्पाया पयसि ददर्श न प्रवाहं स्वप्नार्ता शिवमिव संततात्ऽतिहृष्टा ॥२७॥

कम्पाया सपदि कथं प्रवाहलोप ईशो मे क्षटिति कुत समागतश्च।
रक्षा मे कथमिह शम्भुना कृतेति साश्चर्या गिरिश उवाच सान्त्वयंस्ताम् ॥२८॥

हे हे मुग्धे हे सुशीले प्रिये हे अम्भोवृद्धिस्ते परीक्षानिमित्ता।
विश्वासात्ते पूजया पूर्णभक्त्या सच्चारित्र्यात् सर्वदाऽहं प्रसन्न. ॥२९॥

एषा पूजा स्थावरं मां चकार किञ्चित्कालं गौतमस्याश्रमे वै ।
तेजोलिङ्गं सन्ततध्वान्तनाशि मत्कं रूपं ध्यानयोगाद् भजस्व ॥३०॥

आविर्भूतस्तत्र तेजस्वरूपो लोकव्याप्तं नाशयिष्ये तमोऽहम् ।
इत्युक्ता सा शम्भुना लोकधात्री पूज्या गौरी शालिनी सुप्रसन्ना ॥३१॥

स्थिरवैभवमर्चितं त्वया सुरपूज्यं वरदं भविष्यति ।
क्षितिलिङ्गमिदं प्रणम्य वै कृतकृत्या भुवि सन्तु मानवाः ॥३२॥

चरितं तव धर्मपालनं मयि भक्ति सुदृढां तपो महत् ।
शिवदं क्षितिलिङ्गपूजनमनुकुर्वन्तु सदा महर्षयः ॥३३॥

अरुणाचलस्य गमनाय प्रस्थिता मुदिता शिवा प्रचुरमञ्जुभाषिणी ।
तपसे तदा सुरमुनीन् समागतान् वचनं जगाद बहुमङ्गलान्वितम् ॥३४॥

मुनयः सुराः शृणुत हे दृढव्रता विमलेऽत्र तिष्ठत सदा नदीतटे ।
नियमाञ्छुभान् विदधत सुखेन वै तपसा शिवं भजत सर्वनायकम् ॥३५॥

सिकताविनिर्मितमिदं मम प्रियं कुचकङ्कणाङ्कितमुदारमाविजम् ।
विधिवर्द्धकं निखिलपापनाशकं क्षितिलिङ्गमर्चयत शम्भुविग्रहम् ॥३६॥

वरदं महेश्वरमहं निषेवितुं सततं वसामि निजगूढरूपतः ।
तपसश्च धर्मपरिपालनाच्छुभाद् वसतां सदा करगता विभूतय ॥३७॥

मद्भक्ता वरमिह याञ्छितं लभन्तां कामाक्षी खलु मम नाम कामदानात् ।
इत्युक्त्वा गिरितनया प्रहर्षणीयं यातोपस्थितशकुनाऽरुणाचलं सा ॥३८॥

यद्गौरी कृतसिकतामहेशमूर्तिरेकाम्रस्य तलगतेशमर्चति स्म ।
तत्रस्था सुरमुनयोऽनुरागयुक्ता एकाम्रेश्वर इति शम्भुनाम चक्रु ॥३९॥

एकाम्रेश्वरमखिलेश्वरं सुकीर्तिं कामाक्षीं वरवरदां स्वसेवकेभ्यः ।
निर्वित्तो बलरहितो हि रामरुपो दूरस्थः प्रणमति दर्शनाभिलाषी ॥४०॥

## ३. धर्मगुप्तचरितम्

महाहवे शाल्वगजेन शत्रुणा प्रोन्मूलिते सत्यरथे महीरुहे ।
स्वज्ञानवायुः प्रसवोन्मुखीं लतां विदर्भराज्ञीं नयति स्म काननम् ॥१॥

कुशकण्टकाहिमसङ्कुले बहुभीदातरि निर्जने वने ।
प्रसवे जनकात्मजेव सा वनिता सत्यरथस्य शोचति ॥२॥

सुषुवे शिवयोग आगते तरुमूले सरसीतटे सुतम् ।
कमलाननमिष्टरोदनं सुतमालोक्य शुचं च विस्मृता ॥३॥

सहसा छलतस्तृषोऽन्तकानुचरी त्याजितपुत्ररत्नकाम् ।
महिषीं सरसीं सुनिर्मलां मकराक्रान्तजलां निनाय सा ॥४॥

श्रमितां क्षुधितां पिपासितां प्रसवानन्तरपथ्यलालसाम् ।
मुखमेलितजीवनाञ्जलिं मकरस्तामगिलत् क्षुधान्वित ॥५॥

अथ चन्द्रमनोहराननं हृदयाह्लादकरं शुचिस्मितम् ।
मुखकैरवचुम्बितं सुतं दधती तत्र यथावुमाप्रजा ॥६॥

गहने विजने भयङ्करे जनविघ्न्याऽपि धियुक्तमर्भकम् ।
वसुधाङ्कगतं सनालकं प्ररुदन्तं रुचिरं ददर्श सा ॥७॥

नृपचिह्नधरं सनालकं नवमुग्धाम्बुजसुन्दराननम् ।
भयदेऽत्र वने निजात्मजं जननी कुत्र गता विहाय हा ॥८॥

क्व आतप उग्रमारुतो वृकसिंहाश्च भुजङ्गवृश्चिका ।
कुखगा बत सन्ति यत्र हा तव का तत्र दशा भविष्यति ॥९॥

तमनाथमवेक्ष्य कानने गतिहीना जलवर्षिलोचना ।
बहुशोकजवाक्यभाषिणी किमु सीमा करुणा शरीरिणी ॥१०॥

इति यावदुमाऽऽकुला शुच सहसा तावदनाथरक्षक ।
शिव आविरभून्महाप्रभो घटज शोकसमुद्रशोषक ॥११॥

सितनीरजगौरविग्रहो मृगराजाजिनसुन्दराम्बर ।
शरदिन्दुविलक्षणानन कनकारण्यजटास्यजाह्नवी ॥१२॥

तरुणेन्दुललाटभूषणो विषकण्ठोऽपि सुधातुमिष्टवाक् ।
अरुणाब्जमनोज्ञलोचनो निजभक्तेषु कृपाकटाक्षभृत् ॥१३॥

कटकाङ्गवहारकुण्डलोपमरुद्राक्षभुजङ्गभूषितः ।
निजभक्तमनोऽलिमालिकावरमञ्जीरयुताङ्घ्रिपङ्कजः ॥१४॥

काशिकादिमहाश्मशानसुनृत्यजेन रजोऽणुना
पादपङ्कजयुग्मकं नमतां ललाटगमक्षरम् ।
दु:खदं विधिनिर्मितं शुभदं विधाय सदा स्वयं
वक्ष्यमाणममुं जनोक्तिगणं यथार्थमदर्शयत् ॥१५॥

विषमस्ति विषस्य भेषजं शिवपादेषु नतेः समुन्नति ।
खलु भस्म ललाटभूषणं सपरर दु:खनिवृत्तिरस्ति यै ॥१६॥

पदपद्मनखस्वभासया स्मरतामानमतां च पश्यताम् ।
हृदये च ललाट ईक्षणे तम आलोक्य विकाशकारक ॥१७॥

प्रभुदर्शनलब्धहर्षया धृतपुत्रोत्तमया नमस्कृतः ।
परिपालय पुत्रवद् ह्यमुं कथयित्वेति शिवस्तिरोदधे ॥१८॥

दीनोद्धारणसुमतेर्दयाम्बुराशेः श्रीशम्भो रुचिरतरं विलोक्य रूपम् ।
पीयूषाधिकमधुरं निशम्य वाक्यं सन्तुष्टा सततमभूत् प्रहर्षिणी सा ॥१९॥

स्वस्तन्यैरथ फलमूलकन्दशाकैर्भिक्षान्नैः प्रचुरतरश्रमोपलब्धैः ।
पुनस्था जनकसुतेव काननस्था स्नेहार्द्रा सुतयुगलं पुपोष माता ॥२०॥

गौरीशदर्शनसुनिश्चितभाग्यवृद्धिर्हर्षान्विता हृदि विचार्य समन्वयं सा ।
प्राप्तं वने धरतनुं भुवि धर्मगुप्तं सत्यव्रतं निजसुतं च चकार नाम्ना ॥२१॥

दारिद्र्यमलाक्षानलदग्धदेहा भिक्षैकवृत्तिः पतिसङ्गहीना ।
परिभ्रमन्ती सुता पृथिव्यां कुन्तीव सायात्पुरमेकचक्राम् ॥२२॥
ब्रह्मज्ञं रुचिरत्नं कृपासमुद्रं शाण्डिल्यं बहुतपसं त्रिकालविज्ञम् ।
विज्ञातुं सुतयुगलस्य भाग्यवृद्धिं दीनोमा प्रमुदितमर्ययाञ्चकार ॥२३॥
अथ मुनिः शिवकीर्तिसुधारसस्नपनशीतलविग्रहधारिणीम् ।
बहुगुणां वररीतिसमन्वितां प्रणिजगाद गिरं स्मितभूषिताम् ॥२४॥
सम्प्राप्य मृत्युं युधि शाल्वभूपात् कृत्वा प्रदोषव्रतपूरणं च ।
महेशपादाम्बुजसेवकाग्र्यः स्वर्गं गतः सत्यरथोऽस्य तातः ॥२५॥
द्वेष्याद् विमाता गरलेन मारिता सा वैरशोधार्यमुपात्तनक्ता ।
सद्यःप्रसूतां जलपानमिच्छुकामजीगलद् मातरमागतां शिशो. ॥२६॥
अमुं सनालं गहने विसर्जितं दीनं रुदन्तं निजभाग्यरक्षितम् ।
दैवाद् भ्रमन्ती सुता समागता विलोक्य खिन्ना सदया बभूविथ ॥२७॥
भूत्वा महेशः प्रकटोऽभिपचयंल्लोकाश्च सर्वान् स्वकृपावलोकनै. ।
भक्तप्रियो भक्तधनश्च भवत्पस्त्वां योजयामास सुतस्य रक्षणे ॥२८॥
सौभाग्यसुन्दरसुशीलकलत्रदातृ—सत्पुत्रदं बहुविधं धनधान्यदायि ।
आयुःकरं बलकरं निखिलामयघ्नं दारिद्र्यदुःखदहनं सुखदं यशस्यम् ॥२९॥
सर्वस्वमेव गिरिजापतिसेवकानां भक्तिप्रदं त्रिजगतां नटराजहृद्यम् ।
कल्याणदं व्रतवरं भुवने प्रदोषं प्रेम्णा प्रपूरयतु सत्यरथात्मजोऽयम् ॥३०॥
पूर्वं तवैष तनयो जनुषि द्विजाग्र्यो लोभात् प्रतिग्रहरतोऽकृतदानकर्मा ।
सन्निर्धनो ह्यय च दोषविनाशनार्थं श्रीशङ्करं शरणदं शरणं प्रयातु ॥३१॥
आराधनेन शिवयो सततं प्रदोषे हेमातपत्रशिवहस्ततलाद् विलापौ ।
स्त्रीपुत्रपौत्रजनिताद्भुतसौख्यपूर्णौ भूभृच्चयार्चितपदौ भुवने भवेताम् ॥३२॥
कैलासे गणपगुहौ यथा स्वतातं केदारं हिमवति धर्मजौ यथा च ।
रामेशं दशरथजौ यथाब्धिसेतौ भक्त्या तौ सततमसेवतां तथेशम् ॥३३॥
भक्त्याऽऽराधयतो व्रतोत्तमतमं शम्भोः प्रदोषव्रतं
षण्मासं परिपूर्णतां नहि गतं तावद् भवानुग्रहात् ।
शोकघ्नं सकलेष्टदं सुखकरं दारिद्र्यदुःखापहं
हस्ते तस्य शुचिव्रतस्य कलशं प्राप्तं धनैः पूरितम् ॥३४॥
प्रदोषव्रतस्यैकवर्षावसाने मुदा शम्भुना ज्ञापितश्चित्रयानः ।
पुरा कन्यकाचित्तगेहीकृताम् स्वकन्यां ददौ धर्मगुप्ताय हृद्याम् ॥३५॥
लब्धेन गन्धर्वपतेर्बलेन स च्छिन्ने करे संयति शाल्वहस्तिनः ।
शुचिव्रतामात्ययुतो बले हरिर्लेभे स्वराज्यं निजवंशपालितम् ॥३६॥
देवाम्बा धृतसुरराजवामनेव शर्वाणी धृतगणनाथषण्मुखेव ।
कौशल्या धृतरघुनाथलक्ष्मणेव द्वौ पुत्रौ हृदि दधती प्रहर्षिणी सा ॥३७॥

व्रतैकवर्ये परिपूर्णतां गते विज्ञापितः कोद्रविणः कर्पादित्ता ।
श्रीधर्मगुप्ताय सुतामनोहृते ददौ सुतामंशुमतीं मनोहराम् ॥३८॥

भूतेशे नृत्यमाने प्रमुदितवदना रत्नपीठस्थितोमा
वाणी वीणां दधाना, जलनिधितनया, रम्यगीते प्रवृत्ता ।
देवेन्द्रो वेणुधारी जलरुहभवनस्तालधारी मृदङ्गी
विष्णुर्देवास्तु विष्वग् विविधततिगता आश्रयन्ते प्रदोषे ॥३९॥

## ४. रेणुकाचार्यचरितम्

चन्द्राननो धृतजटाशिवरत्नलिङ्गो दण्डी कमण्डलुधरो रुचिरत्रिनेत्रः ।
रुद्राक्षरक्तवसनो धवलत्रिपुण्ड्रः सोमेश्वराद् यतिवरोऽजनि रेणुकाख्य ॥१॥

सूर्येन्दुरुग्रोधकविन्ध्यशिक्षकमातापि-वातापि-सुरारिभक्षकम् ।
कुम्भोद्भवं वारिधिवारिशोषकं सन्तोषितो यः शिवतत्त्वदानतः ॥२॥

सङ्कल्पितेषु नवकोटिषु रावणेन शिष्टं त्रिकोटिशिवलिङ्गमहोदयालुः ।
हृष्टो यती सुविनयेन विभीषणस्य ह्यस्थापयद् युगपदेव वपूंषि धृत्वा ॥३॥

श्रीशैलशैलशिखरे शिवदर्शनार्थं प्रेम्णाऽद्भुतां विदधता विविधां तपस्याम् ।
श्रीशङ्करेण गुरुणा जगतां हितेन वाणी श्रुता खजनितेति सुखैकदात्री ॥४॥

श्रीरेणुकाचार्यगुरोः सकाशात् श्रीचन्द्रमौलीश्वरलिङ्गमाप्य ।
प्रेम्णा सदाऽभ्यर्चत ईदृशस्ते भविष्यतीच्छा सकला सुपूर्णा ॥५॥

अर्थी यथा सुरतरुं कमलं यथाऽर्कं शिष्यो यथा गुरुवरं कुमुदं यथेन्दुम् ।
श्रीरेणुकं शिवकरं भजतां भयघ्नं श्रीशङ्करः समुपगम्य तथा जहर्ष ॥६॥

श्रीरेणुकाचार्यगुरुः प्रसन्नः श्रीचन्द्रमौलीश्वरलिङ्गमस्मै ।
ददौ मुदा शङ्करयाचकाय फलं मनोज्ञं नवकल्पवृक्षः ॥७॥

चोलस्य प्रार्थनया मुदितो निजकरसरोरुहस्पर्शात् ।
श्रीवरवराजशिरसः कम्पं विनिवारयामास ॥८॥

मासूरे वटवृक्षे पक्षी जायापती सदा वसतः ।
दृष्ट्वा दुर्मनसौ तौ चकार कोपादयोगोलौ ॥९॥

खङ्गे तयोश्च रचिते आज्ञाकारेण लोहकारेण ।
एकं खड्गमयच्छद् विप्रमरवर्ये स्वभक्ताय ॥१०॥

गोरक्षनाथनाम्नः कोल्हापुरपस्य साधुजनशम्नोः ।
भवनं गत्वा राज्ञोऽयाचत भिक्षां स योगीश ॥११॥

भवनागमनं श्रुत्वा गोरक्षः कोपलोहितो
असिना हस्तं छेत्तुं प्रेरितवान् स्त्रीं स गो
करकर्तनसोद्योगां नारीं प्रविलोक्य ।
खड्गं द्वितीयमुदरेऽक्षेप

एकाम्रेश्वरनिकटे श्रीरेणुककरसरोरुहस्पर्शात् ।
मङ्गल इव तेजस्वी श्रीरुद्रमुनिः क्षितेर्जातः ॥१४॥

शुभगुणगणसम्पन्नं श्रीरुद्रमुनिं विलोक्य मुदितः सः ।
रम्भापुरेऽभ्यषेचत् सुवीरसिंहासने शैवे ॥१५॥

शिवभक्तिकल्पलतिकां स्थले स्थले दधतीं चतुःफलफलां स्वरोपिताम् ।
निजवाक्सुधाभिरभिषिच्य रेणुको भवधाम्नि सोमयुत ईश्वरे लयः ॥१६॥

## ५. एकलिङ्गचरितम्

पत्युर्हिताय गिरिजार्चनसक्तचित्ता स्वर्गं गतस्तव पतिर्निहतो युधीति ।
श्रुत्वाऽपि धैर्यमवलम्ब्य च कालयोग्यं बाप्पां सुतं सपदि पुष्पवती प्रसूता ॥१॥

दत्त्वा सुतं द्विजवराय सुशर्मनाम्ने स्वं जीवनं मितसुखं तनयं च बुद्ध्वा ।
चित्ते हृदे पतिपदाम्बुरुहं स्मरन्ती नाथं सुखादनुजगाम पतिव्रता सा ॥२॥

संवर्धितो द्विजगृहे पुरि नागदायां दिव्याकृतिर्नृपतिचिह्नविराजमानः ।
बाप्पा सुधीर्गुणनिधिः कृतसत्यसिद्धिर्गाश्चारयन्नुपगतं समयं निनाय ॥३॥

वेणोर्वने द्विजसुधेनुपयोऽभिषिक्तं ब्रह्मेशविष्णुतपनाननमादिदेवम् ।
दिव्यं स्वयम्भुवमथाद्भुतनीलवर्णं बाप्पा ददर्श गिरिशं शिवमेकलिङ्गम् ॥४॥

तल्लिङ्गतः प्रकटितः करुणासमुद्रो हारीतराशिरिति नाम सुयोगिरूपः ।
आराधितः सुमतिना वरमित्युवाच मेवाडपः कुलधरश्च भविष्यसि त्वम् ॥५॥

श्रीशङ्करस्य समुदः कृपयोपलब्धं सैन्यैर्विचित्रचरितैश्चतुरङ्गपूर्णैः ।
बाप्पा विजित्य समरे जनकस्य शत्रून् लेभे स्वराज्यमचलामिव धर्मगुप्त ॥६॥

## ६. दाशार्हराजकथा

दाशार्हनामा मथुरानगर्यां बभूव भूपः स्मरजैतृरूपः ।
स एकदा मन्मथबाणविद्धः कलावतीं स्वस्त्रियमालिलिङ्ग ॥१॥

स्पृष्टस्तदङ्गानलतापतप्त आश्चर्यमग्नः समुवाच राजा ।
हे चन्द्रकान्ते नवपद्मगात्रे कथं तवाङ्गानि विदाहकानि ॥२॥

सा हृत्स्थितेश्वरललाटसुधांशुकान्त्या दीप्तं जगाद वचनं स्मितकैतवेन ।
आराधनं शिवपदाम्बुजयोरकृत्वा स्प्रष्टुं कथं च सहसे गिरिशव्रतां माम् ॥३॥

गर्गोपदिष्टात् सकलेष्टदातुर्नमः शिवायेति जपात् तदानीम् ।
पापं नृपाङ्गाद् धृतकाकरूपं निःसृत्य दग्धं पतितं मृतं च ॥४॥

## ७. श्रीरामचरितम् (अपूर्णम्)

### प्रथमः सर्गः

रम्ये रसाद्रिनवभूमितवैक्रमाब्दे मासाश्विने सितदले सुविहाय निद्राम् ।
वाणी यदा मम मनःसदने ननर्त श्रीरामचन्द्रचरितं सहसा प्रवृत्तम् ॥१॥

प्रतंकवर्षे परिपूर्णतां गते विज्ञापितः कोद्रविणः कर्पाविना ।
श्रीधर्मगुप्ताय सुतामनोहृते ददौ सुतामंशुमतीं मनोहराम् ॥३८॥

भूतेशो नृत्यमाने प्रमुदितवदना रत्नपीठस्थितोमा
वाणी वीणां दधाना, जलनिधितनया, रम्यगीते प्रवृत्ता ।
देवेन्द्रो वेणुधारी जलरुहभवनस्तालधारी मृदङ्गी
विष्णुर्देवास्तु विष्वग् विविधततिगता आश्रयन्ते प्रदोषे ॥३९॥

## ४. रेणुकाचार्यचरितम्

चन्द्राननो धृतजटाशिवरत्नलिङ्गो दण्डी कमण्डलुधरो रुचिरस्त्रिनेत्रः ।
रुद्राक्षरक्तवसनो धवलत्रिपुण्ड्रः सोमेश्वराद् यतिवरोऽजनि रेणुकाख्य ॥१॥

सूर्येन्दुरोधकविन्ध्यशिक्षकमातापि-वातापि-सुरारिभक्षकम् ।
कुम्भोद्भवं वारिधिवारिशोषकं सन्तोषितो यः शिवतत्त्वदानतः ॥२॥

सङ्कल्पितेषु नवकोटिषु रावणेन शिष्टं त्रिकोटिशिवलिङ्गमहोदयालुः ।
हृष्टो यती सुविनयेन विभीषणस्य ह्यस्थापयद् युगपदेव वपूंषि धृत्वा ॥३॥

श्रीशैलशैलशिखरे शिवदर्शनार्थं प्रेम्णाऽद्भुतां विदधता विविधां तपस्याम् ।
श्रीशङ्करेण गुरुणा जगतां हितेन वाणी श्रुता स्वजनितेति सुखैकदात्री ॥४॥

श्रीरेणुकाचार्यगुरोः सकाशात् श्रीचन्द्रमौलीश्वरलिङ्गमाप्य ।
प्रेम्णा सदाऽभ्यर्चत ईदृशस्ते भविष्यतीच्छा सकला सुपूर्णा ॥५॥

अर्थी यथा सुरतरुं कमलं यथाऽर्कं शिष्यो यथा गुरुवरं कुमुदं यथेन्दुम् ।
श्रीरेणुकं शिवकरं भजतां भयघ्नं श्रीशङ्करः समुपगम्य तथा जहर्ष ॥६॥

श्रीरेणुकाचार्यगुरुः प्रसन्नः श्रीचन्द्रमौलीश्वरलिङ्गमस्मै ।
ददौ मुदा शङ्करयाचकाय फलं मनोज्ञं नवकल्पवृक्षः ॥७॥

चोलस्य प्रार्थनया मुदितो निजकरसरोरुहस्पर्शात् ।
श्रीवरदराजशिरसः कम्पं विनिवारयामास ॥८॥

माधूरे वटवृक्षे पक्षी जायापती सदा वसतः ।
दृष्ट्या दुर्मनसौ तौ चकार कोपादयोगोलौ ॥९॥

खड्गे तयोश्च रचिते आशाकारेण लोहकारेण ।
एकं खड्गमयच्छद् विक्रमरवये स्वभक्ताय ॥१०॥

गोरक्षनाथनाम्नः कोल्हापुरपस्य साधुजनशत्रोः ।
भवनं गत्वा राज्ञोऽयाचत भिक्षां स योगीशः ॥११॥

भवनागमनं श्रुत्वा गोरक्षः कोपलोहितो जातः ।
असिना हस्तं छेत्तुं प्रेरितवान् स्त्रीं स गोरक्षः ॥१२॥

करवर्तनसोद्योगां नारीं प्रविलोक्य रेणुकाचार्यः ।
खड्गं द्वितीयमुदरेऽक्षिप्सीद् गोरक्षनाथस्य ॥१३॥

एकाम्रेश्वरनिकटे श्रीरेणुककरसरोरुहस्पर्शात् ।
मङ्गल इव तेजस्वी श्रीरुद्रमुनिः क्षितेर्जातः ॥१४॥

शुभगुणगणसम्पन्नं श्रीरुद्रमुनिं विलोक्य मुदित सः ।
रम्भापुरेऽभ्यर्येचत् सुवीरसिंहासने शैवे ॥१५॥

शिवभक्तिकल्पलतिका स्थले स्थले दधतीं चतु फलफलां स्वरोपिताम् ।
निजवाक्सुधाभिरभिषिच्य रेणुको भवधाम्नि सोमयुत ईश्वरे लय ॥१६॥

## ५. एकलिङ्गचरितम्

पत्युर्हिताय गिरिजार्चनसक्तचित्ता स्वर्गं गतस्तव पतिर्निहतो युधीति ।
श्रुत्वाऽपि धैर्यमवलम्ब्य च कालयोग्य बाप्पां सुतं सपदि पुष्पवती प्रसूता ॥१॥

दत्वा सुतं द्विजवराय सुशर्मनाम्ने स्व जीवनं मितसुखं तनयं च बुद्ध्वा ।
चित्ते हृदे पतिपदाम्बुरुहं स्मरन्ती नाथं सुखादनुजगाम पतिव्रता सा ॥२॥

संवर्धितो द्विजगृहे पुरि नागदाया दिव्याकृतिर्नृपतिचिह्नविराजमानः ।
बाप्पा सुधीर्गुणनिधिः कृतसत्यसिद्धिर्गाश्चारयन्ननुपगतं समयं निनाय ॥३॥

वेणोर्वने द्विजसुधेनुपयोऽभिषिक्तं ब्रह्मेशविष्णुतपनाननमादिदेवम् ।
दिव्यं स्वयम्भुवमयाद्भुतनीलवर्णं बाप्पा ददर्श गिरिशं शिवमेकलिङ्गम् ॥४॥

तल्लिङ्गतः प्रकटितः करुणासमुद्रो हारीतराशिरिति नाम सुयोगिरूपः ।
आराधित. सुमतिना वरमित्युवाच मेवाडपः कुलधरश्च भविष्यसि त्वम् ॥५॥

श्रीशङ्करस्य समुदः कृपयोपलब्धै. सैन्यैर्विचित्रचरितैश्चतुरङ्गपूर्णे ।
बाप्पा विजित्य समरे जनकस्य शत्रून् लेभे स्वराज्यमचलामिव धर्मगुप्त ॥६॥

## ६. दाशार्हराजकथा

दाशार्हनामा मथुरानगर्यां बभूव भूप स्मरजेतृरूप ।
स एकदा मन्मथबाणविद्ध. कलावतीं स्वस्त्रियमालिलिङ्ग ॥१॥

स्पृष्टस्तदङ्गानलतापतप्त आश्चर्यमग्न समुवाच राजा ।
हे चन्द्रकान्ते नवपद्मगात्रे कथं तवाङ्गानि विदाहकानि ॥२॥

सा हृत्स्थितेश्वरललाटसुधांशुकान्त्या दीप्तं जगाद वचनं स्मितकैतवेन ।
आराधनं शिवपदाम्बुजयोरकृत्वा स्प्रष्टुं कथं च सहसे गिरिशव्रतां माम् ॥३॥

गर्गोपदिष्टात् सकलेष्टदातुर्नम शिवायेति जपात् तदानीम् ।
पाप नृपाङ्गाद् धृतकाकरूप निसृत्य दग्धं पतितं मृतं च ॥४॥

## ७. श्रीरामचरितम् (अपूर्णम्)

### प्रथमः सर्गः

रम्ये रसाद्रिनवभूमितवैक्रमाब्दे मासाश्विने सितदले सुविहाय निद्राम् ।
वाणी यदा मम मन.सदने ननर्त श्रीरामचन्द्रचरितं सहसा प्रवृत्तम् ॥१॥

कृपाकरं विघ्नहरं दिनेश्वरं श्रियं च विद्यां ददतीं सरस्वतीम् ।
हरिं हरं दुःखहरं च शङ्करं निरन्तरं हृत्कमले स्मराम्यहम् ॥२॥

मुखविधुच्छविशोषितमोहरं विकचनीलसरोरुहलोचनम् ।
दशरथाङ्कविराजितमीश्वरं भज मन सुखदं रघुनन्दनम् ॥३॥

मञ्जीरशोभितपदं करपारिहार्यं हारं सुदीप्तहृदयं घननीलदेहम् ।
चामीकराभवसनं क्षितिपाङ्कखेलं रामं भजे नयनभृङ्गसुपेयवक्त्रम् ॥४॥

शुभाङ्गणे रिङ्गणधूलिधूसरं नवीननीलाब्जवपुर्जितस्मरम् ।
तडिद्द्विजं पद्मदृशं सहानुजं स्मरामि रामं पितृमोददायकम् ॥५॥

कदाचिद् विधुं सद्हठाद् याचमानाः कदाचिच्च बिम्बं विलोक्याशु भीताः ।
कृतायापकक्याणनृत्याम्बहर्षा अयोध्येशपुत्रा मनोऽब्जे वसन्तु ॥६॥

द्विरेफावलीकान्तिनुत्काकपक्षश्चलत्कुण्डलोद्दीप्तगण्डः सुवक्त्रः ।
तडित्कुन्दमुक्तावलीदन्तपङ्क्तिः प्रवालाधरश्चारुवाग् रामचन्द्रः ॥७॥

कौसल्यात्रिदशनदीजनीलपद्मं तृष्णायुग्दशरथनेत्रभृङ्गपेयम् ।
भूपालैः कृतसुकृतैः शिरःसु धार्यं श्रीरामं निजहृदये स्मरामि नित्यम् ॥८॥

परमसुभगपादूनद्धपादारविन्दः करधृतशरचापो बद्धतूणीररत्नः ।
जितमनसिजरूपो रामचन्द्रो दयालुर्विहरति सखिवृन्दैः कूलदेशे सरय्वाः ॥९॥

कौसल्याकनकखनीद्भनीलरत्नं सुधेयोदशरथनेत्रभृङ्गपेयम् ।
श्रीरामो रघुकुलमङ्गलप्रदीपो दारिद्र्यं हरति विलोकितः स्मृतो वा ॥१०॥

दशशतमुखवाणीवर्णितस्तोत्रजालः शिवहृदयनिवासी सच्चिदानन्दरूपः ।
अमरपतिहितार्थं सूर्यवंशावतंसः सकलपुरहितैषी हर्षसिन्धुर्वतीर्णः ॥११॥

शशिधवलशरीरः शान्तमूर्तिर्महात्मा बहुकठिनतपोभिः प्राप्तविप्रर्षिसञ्ज्ञः ।
निशिचरहतयज्ञो रामचन्द्रं वरीतुं दशरथनृपमागाद् गाधिपुत्रस्तदानीम् ॥१२॥

पूजार्हचन्दनपयोमधुपर्कपुष्पैः सम्पूज्य गाधितनयं नृपचक्रवर्ती ।
हर्षप्रफुल्लहृदयो मुनिमित्युवाच त्वद्दर्शनाज्जगति धन्यतरोऽहमद्य ॥१३॥

श्रीगाधिनन्दनपदाम्बुरुहं नमन्त्यः श्रीकोसलेशवनिताः शुभशीलयुक्ताः ।
रामादिपुत्रसहिताः परमाशिषा यं दृष्ट्वा विभान्त्यमृतसिक्तलता यथैव ॥१४॥

श्रीरामचन्द्रमनुजैर्मिलितं विलोक्य रोमाञ्चभूषिततनुः सजलेक्षणाब्ज ।
आनन्दसागरनिमग्नमना मुनीश पस्पर्श राघवशिर. करपङ्कजेन ॥१५॥

नीलाब्जसुन्दरतनुं धृतपीतवस्त्रं पूर्णेन्दुचन्दनहिमं स्वजते स्म रामम् ।
भूपं प्रशंसति पुन पुनरित्युवाच सद्भाग्यवांस्त्रिभुवने न भवादृशोऽस्ति ॥१६॥

कृत्वा कराम्बुजपुटं विनयामृताक्तमानन्दगद्गदवचोमधुरं बभाषे ।
त्वत्पादपङ्कजयुगं सुखदं विलोक्य जातोऽहमद्य भुवने कृतकृत्यकामः ॥१७॥

हे नाथ तापसजनेश्वर निःस्पृहेश हे पूर्णकाम जगतीतलदुःखहन्त ।
त्वत्सेवकः फलचतुष्टयमेत्यतोऽहं प्रष्टुं बिभेमि भवत. कथमागतोऽसि ॥१८॥

भूपं प्रशस्य जगदे मुनिना हितेन विघ्नन्ति राक्षसगणा मम यज्ञकार्यम् ।
याचे भवन्तमरिवीर्यनिराकरिष्णु राम सलक्ष्मणमतो मखरक्षणाय ॥१९॥

आकर्ण्य कर्णकटुक वचन महर्षे स्नेहाभिभूतहृदय सुतभूषणस्य ।
तस्योत्तर न हि ददौ दशयानभूपश्चिन्तापयोनिधिनिमग्नमना मुमोह ॥२०॥

दृष्ट्वा विषण्णवदन नृपति वसिष्ठस्तेजस्तपोबलधृतो कुशिकान्वयस्य ।
उक्त्वा प्रभावमतुल च रघूद्वहस्य धैर्यान्वित सपदि कोसलप चकार ॥२१॥

आलिङ्ग्य पुत्रयुगल मुदितान्तरात्मा दत्वाऽऽशिष शुभकरीमुपदिश्य भूय ।
मत्पुत्रराज्यधनपोऽसि मुने त्वमुक्त्वा राम सलक्ष्मणमदान्मुनिकौशिकाय ॥२२॥

ससारभारहरण प्रथमप्रयाणो क्रव्यादकुञ्जरहरिर्मतिमान् वलिष्ठ ।
हृष्टो गुरून् दशरथ जननी प्रणम्य लब्ध्वाऽऽशिष मुनिवर सहलक्ष्मणोऽगात् ॥२३॥

बद्ध्वा सुवर्णवसनेन दृढ निषङ्ग धृत्वा शरासनशरे व्रजतीश्वरेशे ।
पौरा वियोगविकला प्रभुसङ्गचित्ता श्रीराममङ्गलकरा जयशब्दमूचु ॥२४॥

श्रीरामलक्ष्मणमहानिधिलाभहृष्ट सम्पूज्य कोशलपति परमाशिषा च ।
गच्छन् निजाश्रममृषि प्रचुर रराज सार्द्धं यथा दिनपतिर्मधुमाधवाभ्याम् ॥२५॥

पुस्फोर दक्षिणभुज शुभकार्यशसी वाति स्म शीतसुरभि पवनोऽनुकूल ।
यातीश्वरे सुमनसो विबुधा ववर्षुश्छायां घनोऽकृतकल चुकुजुर्विहङ्गा ॥२६॥

मुख चन्द्रज्योति कमलरुचिर पादयुगल
तडिद्वद्गम्भीर मधुरवचन श्रीरघुपते ।
सदा दृष्ट्वा लब्ध्वा श्रवणविषयीकृत्य सुजना
सुख हर्षं नृत्य दधतु च चकोरालिशिखिवत् ॥२७॥

इति श्रीरामचरिते रघुनन्दनबालशोभावर्णनं नाम प्रथमः सर्गः ।

## द्वितीयः सर्गः

अथ सरोरुहसुन्दरलोचनौ पृथुलदीर्घभुजौ पृथुवक्षसौ ।
तपनजह्नुसुताच्छविग्रहौ मुनिमन सदनौ पथि रेजतु ॥१॥

श्रीयुक्तान् मणिगणधारिणो महीध्रान् पुष्पाढ्या फलदलशोभिता द्रुवल्ली ।
पीयूषोपमसलिलान् सरोजपूर्णान् कासारान् विपुलनदीर्विलोक्य हृष्टौ ॥२॥

हृष्यद्भ्या शिशुरुचिरस्वभावहेतोर्धावद्भ्या मृगविहगा मनोज्ञरूपा ।
रुध्यन्ते मुनिभयतो निवर्तिताभ्या तल्लीला मुनिहृदये प्रहर्षिणीयम् ॥३॥

दृष्ट्वा वर्त्मनि ताडिका मुनिवर प्रोवाच राम तदा
हे राजेन्द्र हरे विनाशय गजा विप्रद्रुमोत्पाटिनीम् ।
स्त्री रक्ष्येति घृणा जहीहि मतिमन् श्रुत्वा च विप्रप्रियो
धावन्तीं निजसम्मुख कुमनसां हत्वा च मुक्ति ददौ ॥४॥

# द्वितीयोऽनुबन्धः

## (समस्यापूर्तयः)

### १. इन्दुरिन्दीवरायते

विवाहहोमधूमेन क्लान्तं वीक्ष्य प्रियामुखम् ।
अजश्चिचिन्त चित्ते स्व इन्दुरिन्दीवरायते ॥१॥
धनुरुत्तोलने काले खिन्नं वीक्ष्य प्रियामुखम् ।
रामश्चिचिन्त चित्ते स्व इन्दुरिन्दीवरायते ॥२॥

श्रीरामरूपपाठकस्य

### २. कालः करालोऽधुना

भेजीटेबिल-डालडा-नवघृते व्याप्ते जगन्मण्डले
शालग्राम-शिवादिपूजनविधौ पञ्चामृते दुर्लभम् ।
होमे गोघृतदर्शनं भवति नो भोज्ये तु किं कथ्यते
सर्वे हीनबला वदन्ति सततं कालः करालोऽधुना ॥

श्रीरामरूपपाठकस्य

### ३. काव्यमाधुरी

रसिकोन्मादिनी नित्यं माधुर्यामृतनिर्झरी ।
चिरं त्वद्धृदयारूढा रमतां काव्यमाधुरी ॥१॥
निशामुखे समासङ्गं मिथः कर्त्तुं समुत्सुकैः ।
सम्भूय रसिकैर्गाढं रस्यतां काव्यमाधुरी ॥२॥
निशामुखे मनोहारि-वसन्ते समयेऽधुना ।
भवद्रसिकसंसर्गा याचते काव्यमाधुरी ॥३॥
सन्ध्या रागारुणं चन्द्रं चातकीवोन्मुखी सती ।
भवन्तं रसिकं कान्तं प्रेक्षते काव्यमाधुरी ॥४॥
रसिकैर्गृह्यमाणायाः सोत्कण्ठं काव्यमाधुरी ।
वसन्ते रमणीयेऽस्मिन् सानन्दाय प्रकल्पताम् ॥५॥

पं० श्रीरामकुबेरमालवीयस्य

रमणीनां परीरम्भो गोस्तनीना रसोऽपि च ।
स्वदते न तथा शश्वद् यथेयं काव्यमाधुरी ॥१॥
पद्मिनी काम्यते भृङ्गैः सङ्गिनी च वियोगिभिः ।
श्रीर्दरिद्रैः रसज्ञैस्तु काम्यतां काव्यमाधुरी ॥२॥

श्रीरतिनाथझाशर्मणः

## ४. किं नाम तप्तं तपः

यः पञ्चाग्नितपा विहाय भवने मातुः पितुः सेवन
यो वर्षाहिमवाततापसहनो भिक्षान्नयाञ्चापरः ।
स्थानस्थानपरोपदेशकुशलः कीर्त्यै तथा सम्पदे
तेनेद निजकर्मधर्मरहितं किं नाम तप्तं तपः ॥१॥

श्रीरामकपपाठकस्य

चण्डांशो, परितापयस्यनुदिन भूमिं तथा शर्वरीं
मुग्धां कैरविणीं कदर्थयसि यत्तत्तेऽस्ति पापं महत् ।
किन्तु त्वा मकरन्दरञ्जितरजोराजीभिरम्भोजिनी
सोत्कण्ठं यदुदीक्षते कथय तत् किं नाम तप्तं तपः ॥१॥

न प्रासारि करोऽवलिप्तधनिनामग्रे, न च व्यग्रता
प्रादर्शि प्रभुतामदान्वितधियां पादौ मुदा चुम्बितुम् ।
येनास्वादि सरस्वतीपदसुधा त्यक्त्वा प्रपञ्चाशयं
तेनानन्यसमानभाग्यनिधिना किं नाम तप्तं तपः

देवेन्द्रेण नुता स्तुता परिजनैः पित्रा भृशं लालिता
सश्लिष्टा मधुसूदनेन च धनाध्यक्षेण सम्पूजिता ।
पद्मा पद्ममुरीकरोति सदनं स्वर्लोकमुत्सृज्य यत्
तत् पद्माकर, मेदिनीस्तुतिकर किं नाम तप्तं तपः

काव्यं कैर्न कृतं तथा रसमयी धारा न कैः [illegible]
रीतिः प्रीतिमयी न कैर्विशदिता नालङ्कृता. [illegible]
एवं सत्यपि कालिदास, भवता या [illegible]
तन्मूलं वद कुत्र पुण्यविपिने किं नाम तप्तं [illegible]

कृष्णात् कृष्णतरं वपुः परभृताचारोऽपि ते [illegible]
पीत्वा चूतरसासवं नयनयो. [illegible]
वाचं किन्तु मुदा सुधामवमुचं [illegible]
यद्वन्द्यो द्विजपुङ्गवेषु वद तत् किं नाम तप्तं

कामो येन विमानितो, विधुरित. क्रोधो, [illegible]
मानो नामित, उज्झिता च ममता, [illegible]
मोहो हन्त हतस्तया च हृदयाद्विर्वासिता
तेनात्यन्तसमाहितेन विदुषा किं नाम तप्तं [illegible]

## ५ किमुदेति रविद्वयम्

हे श्रीमाहेश्वरानन्द त्वा विलोक्य तमोहरम् ।
शङ्कयते पण्डितै. प्रात किमुदेति रविद्वयम् ॥१॥

## ६. कीटिका वारणायते

सैन्यद्रुपु विनष्टेषु देव्या संग्राममूर्धनि ।
व्याकुलो महिषः प्राह कीटिका वारणायते ॥१॥

श्रीरामरूपपाठकस्य

## ७. कुशलीभवन्तु

विद्याविनोदरसिका वरकार्यदक्षाः कीर्त्या दिगन्ततततया शरदिन्दुकान्त्या ।
युक्ताः सुतैर्बुधसुतैर्धनधान्यपूर्णाः प्राध्यापका सबटवः कुशलीभवन्तु ॥१॥

श्रीरामरूपपाठकस्य

यन्नादृतस्त्वमलिना मलिनाशयेन किं तेन चम्पक, विषादमुरीकरोषि ।
विश्वाभिरामनवनीरदनीलवेषा केशा कुशेशयदृशां कुशलीभवन्तु ॥१॥

पं० श्रीरामकुबेरमालवीयस्य

निन्दन्तु मूढमतय पतय खलानां वाचं सुधामुचमपीह कवीश्वराणाम् ।
चिन्ता मनागपि न तेन कवीन्द्र कार्या काव्यामृतप्रणयिनः कुशलीभवन्तु ॥१॥

वैज्ञानिका विकलयन्तु तथान्यभाषा-भिज्ञा अपि प्रकटयन्तु सपत्नवृत्तिम् ॥
मातः सरस्वति, न चिन्तय तेन चित्ते त्वत्कीर्त्तिवर्धनपराः कुशलीभवन्तु ॥२॥

श्रीरतिनाथझाशर्मणः

## ८. कोऽपि गोपतनयो नमस्यते

यस्य सर्वमुदरे विलीयते सन्ततं जगदिदं युगक्षये ।
क्रीडया स रमयन् व्रजाङ्गना कोऽपि गोपतनयो नमस्यते ॥१॥

जीवनं सुबहुदुःखदूषितं हन्त हन्त जलबुद्बुदोपमम् ।
क्षेपणाय निजजन्मजन्मनां कोऽपि गोपतनयो नमस्यते ॥२॥

श्रीजगन्नाथपाठकस्य

## ९. क्रमादमृतायते

हरिणनयना लज्जायुक्ता नवाङ्कुरयौवना
मधुरवचना ह्रीकामाभ्या समा हृदयङ्गमा ।
सुरतचतुरा क्रोडस्थेशा निरन्तरचुम्बिता
त्रिविधवनिता नृणां भाग्यात् क्रमादमृतायते ॥ ॥

श्रीरामरूपपाठकस्य

रहसि रतिलीलोल्लासोत्कण्ठिते दयिते जने
गमनमपि संत्रासोद्रेकान्न वाञ्छति कामिनी ।
परमतितरा मुग्धालापप्रसादतसम्भ्रमं-
युवनिहृदये पत्युः केलि क्रमादमृतायते ॥१॥

## ४. किं नाम तप्तं तपः

य पञ्चाग्नितपा विहाय भवने मातु पितु सेवन
यो वर्षाहिमवाततापसहनो भिक्षान्नयाञ्चापर ।
स्थानस्थानपरोपदेशकुशल कीर्त्यै तथा सम्पदे
तेनेद निजकर्मधर्मरहित किं नाम तप्तं तपः ॥१॥

श्रीरामरूपपाठकस्य

चण्डांशो, परितापयस्यनुदिन भूमि तथा शर्वरीं
मुग्धां कैरविणीं कदर्थयसि यत्तत्तेऽस्ति पाप महत् ।
किन्तु त्वा मकरन्दरञ्जितरजोराजीभिरम्भोजिनी
सोत्कण्ठ यदुदीक्षते कथय तत् किं नाम तप्तं तपः ॥१॥

न प्रासारि करोऽवलिप्तधनिनामग्रे, न च व्यग्रता
प्रादर्शि प्रभुतामदान्धितधिया पादौ मुदा चुम्बितुम् ।
येनास्वादि सरस्वतीपदसुधा त्यक्त्वा प्रपञ्चासव
तेनानन्यसमानभाग्यनिधिना किं नाम तप्तं तपः ॥२॥

देवेन्द्रेण नुता स्तुता परिजनै पित्रा भृश लालिता
सश्लिष्टा मधुसूदनेन च धनाध्यक्षेण सम्पूजिता ।
पद्मा पद्ममुरीकरोति सदन स्वर्लोकमुत्सृज्य यत्
तत् पद्माकर, मेदिनीस्तुतिकर किं नाम तप्त तपः ॥३॥

काव्य कैर्न कृत तथा रसमयी धारा न कै प्लाविता
रीति प्रीतिमयी न कैर्विशदिता नालङ्कृता कैर्गिर ।
एव सत्यपि कालिदास, भवता या कीर्तिरासादिता
तन्मूल वद कुत्र पुण्यविपिने किं नाम तप्तं तपः ॥४॥

कृष्णात् कृष्णतर वपु परभृताचारोऽपि ते विश्रुत
पीत्वा चूतरसासव नयनयो शोणत्वमुद्भावित ।
वाच किन्तु मुदा सुधामदमुच साम्रेडमाचामयन्
मद्वन्द्यो द्विजपुङ्गवेषु वद तत् किं नाम तप्तं तपः ॥५॥

कामो येन विमानितो, विधुरित क्रोधो, मदो मर्दितो
मानो नामित, उज्झिता च ममता, मात्सर्यमुत्सारितम् ।
मोहो हन्त हतस्तथा च हृदयान्निर्वासिता वासना
तेनात्यन्तसमाहितेन विदुषा किं नाम तप्तं तपः ॥६॥

श्रीरतिनाथझाशर्मण

## ५ किमुदेति रविद्वयम्

हे श्रीमाहेश्वरानन्द त्वा विलोक्य तमोहरम् ।
शङ्क्यते पण्डितै प्रात किमुदेति रविद्वयम् ॥१॥

श्रीरामरूपपाठकस्य

## ६. कीटिका वारणायते

सैन्यद्रुपु विनष्टेषु देव्या संग्राममूर्धनि ।
व्याकुलो महिषः प्राह कीटिका वारणायते ॥१॥

श्रीरामरूपपाठकस्य

## ७. कुशलीभवन्तु

विद्याविनोदरसिका वरकार्यदक्षाः कीर्त्या दिगन्ततनया शरदिन्दुकान्त्या ।
युक्ताः सुतैर्बुधसुतैर्धनधान्यपूर्णाः प्राध्यापका सबटवः कुशलीभवन्तु ॥१॥

श्रीरामरूपपाठकस्य

यन्मादृतस्त्वमलिना मलिनाशयेन किं तेन चम्पक, विषादमुरीकरोषि ।
विश्वाभिरामनवनीरदनीलवेषा. केशा कुशेशयदृशा कुशलीभवन्तु ॥१॥

पं० श्रीरामकुबेरमालवीयस्य

निन्दन्तु मूढमतय पतय खलानां वाचं सुधामुचमपीह कवीश्वराणाम् ।
चिन्ता मनागपि न तेन कवीन्द्र कार्या काव्यामृतप्रणयिन. कुशलीभवन्तु ॥१॥

वैज्ञानिका विकलयन्तु तथान्यभाषा-भिज्ञा अपि प्रकटयन्तु सपत्नवृत्तिम् ॥
मातः सरस्वति, न चिन्तय तेन चित्ते त्वत्कीर्तिवर्धनपराः कुशलीभवन्तु ॥२॥

श्रीरतिनाथझाशर्मणः

## ८. कोऽपि गोपतनयो नमस्यते

यस्य सर्वमुदरे विलीयते सन्ततं जगदिदं युगक्षये ।
क्रीडया स रमयन् व्रजाङ्गना कोऽपि गोपतनयो नमस्यते ॥१॥

जीवनं सुखदुःखदूषितं हन्त हन्त जलबुद्बुदोपमम् ।
क्षेपणाय निजजन्मजन्मना कोऽपि गोपतनयो नमस्यते ॥२॥

श्रीजगन्नाथपाठकस्य

## ९. क्रमादमृतायते

हरिणनयना लज्जायुक्ता नवाङ्कुरयौवना
मधुरवचना ह्रीकामाभ्या समा हृदयङ्गमा ।
सुरतचतुरा क्रीडस्थेशा निरन्तरचुम्बिता
त्रिविधवनिता नृणा भाग्यात् क्रमादमृतायते ॥ ॥

श्रीरामरूपपाठकस्य

रहसि रतिलोलोल्लासोत्कण्ठिते दयिते जने
गमनमपि संत्रासोद्रेकान्न वाञ्छति कामिनी ।
परमतितरा मुग्धालापप्रसादनसम्भ्रमं-
र्युवतिहृदये पत्युः केलि. क्रमादमृतायते ॥१॥

प्रथममिह वर्णज्ञानारम्भश्रमैरतिखेदितं
शिशुजनमन कालेनाल्पेन दीव्यति विद्यया ।
स्फुरति परमानन्दज्योतिस्ततो हृदि निर्मलं
सपदि हि कृतः शास्त्राभ्यासः क्रमादमृतायते ॥२॥ श्रीरतिनाथझाशर्मणः

## १०. क्षाराप्यहो ! परिणता मधुराम्बुधारा

भारायिता वदनसीम्नि जडाशयानां साराऽमृतं स्रवति सा भणितिः कवीनाम् ।
वारान्निधेर्जलधरैरुपनीयमाना क्षाराप्यहो ! परिणता मधुराम्बुधारा ॥१॥
श्रीबटुकनाथखिस्तेशास्त्रिणः

प्राप्योपकारनिरतं जनमाशु दोषा सन्तापका अपि सुतोषकरा भवन्ति ।
वारान्निधेर्घनगुणैर्ननु नीयमाना क्षाराप्यहो ! परिणता मधुराम्बुधारा ॥१॥
श्रीरामायणद्विवेदिनः

प्रायेण सद्गुणवतां समवाप्य सङ्गं मूर्खस्य बुद्धिरपि शुद्धगुणं बिभर्ति ।
लब्ध्वा परोपकरणे नियतं पयोदं क्षाराप्यहो ! परिणता मधुराम्बुधारा ॥१॥
श्रीचन्द्रशेखरद्विवेदिनः

किं वस्तु दोषसहितं सगुणं किमस्ति सान्निध्यमेव गुणदायकमत्र मन्ये ।
सिन्धोर्यतो जलधरावलिलाल्यमाना क्षाराप्यहो ! परिणता मधुराम्बुधारा ॥१॥
श्रीब्रह्मानन्दपाण्डेयस्य

स्वातीजलं फणिवरस्य मुखे निषिक्तं सञ्जायते विषममेव विषं जगत्याम् ।
शुक्तौ प्रयाति मणितां नियतिप्रभावात् क्षाराप्यहो ! परिणता मधुराम्बुधारा ॥१॥
श्रीरामभरोसेशास्त्रिणः

आश्रित्य सज्जनसमाजविचारराजि मूढो भवेद् यदि बुधो नहि तत्र चित्रम् ।
किं न श्रुतं जलनिधेर्जलदैर्गृहीता क्षाराप्यहो ! परिणता मधुराम्बुधारा ॥१॥
श्रीसूर्यप्रसादमिश्रस्य

नैव स्थिरं जगति किञ्चन चार्वचारु सम्पर्क एव हि सतां गुणमातनोति ।
पाथोनिधेरधिगता विगुणापि मेघे क्षाराप्यहो ! परिणता मधुराम्बुधारा ॥१॥
श्रीवेदमणिमिश्रस्य

धृत्तं विपत्तिकरमप्यनिशं जगत्यां काव्ये निबद्धमतुलं सुखमेव सूते ।
मार्णा किं जलधरैरनुगृह्यमाणा क्षाराप्यहो ! परिणता मधुराम्बुधारा ॥१॥
श्रीरतिनाथझाशर्मणः

## ११. खेलतु

कल्लोलावलिलोलकूजितमिलत्कादम्बकेलिस्थिते
कान्ताचारुकटाक्षकौतुककलाकाव्ये कदम्बालये ।
कालिन्दीकमनीयफुल्लपुलिने क्रीडाकलाकोविदा
काली कापि पिकालिकालिकसखी सा लाकृतिः खेलतु ॥१॥
श्रीबटुकनाथशास्त्रिखिस्तेमहाशयस्य

## १२. चन्द्रोदये नृत्यति चक्रवाकी

त्रिलोचनस्याद्भुतभालचन्द्रात् काशीपुरे ध्वस्ततम.समूहे ।
विद्वन्मुखाब्जे विकचे हि वाणी चन्द्रोदये नृत्यति चक्रवाकी ॥ श्रीरामरूपपाठकस्य

## १३. चन्द्रोदये रोदिति चक्रवाकी

कामाग्नितप्ता नवयौवनाढ्या प्राणप्रियान्वेषणमुख्यकार्या ।
पतिव्रता प्रोषितभर्तृकेव चन्द्रोदये रोदिति चक्रवाकी ॥१॥ श्रीरामरूपपाठकस्य

## १४. चेतश्चमत्कृतिकरी प्रसरीसरीतु

तल्पे प्रिया शशिमुखी वनिता नवीना गोष्ठ्या सतां रसवती कविता नवीना ।
मद्भारते विजयिनां करवालशक्तिश्चेतश्चमत्कृतिकरी प्रसरीसरीतु ॥१॥
वीणाकरा स्मितमुखी जनतापहर्त्री चन्द्रोज्ज्वला सुमतिदा धृतमाध्यमाला ।
श्रीशारदा कविनुता कलहंसयाना चेतश्चमत्कृतिकरी प्रसरीसरीतु ॥२॥
श्रीरामरूपपाठकस्य

वृन्दारकेशशिरसोऽपि विकम्पहेतुरानन्दसिन्धुरससीकरसिक्तदेहा ।
मूलं मुदः सहृदयस्य कवीन्द्रसूक्तिश्चेतश्चमत्कृतिकरी प्रसरीसरीतु ॥१॥
श्रीरतिनाथझाशर्मणः

## १५. जीवनं भारभूतम्

मन्दं मन्दं नदति मुदिरे मोदमाना मयूरा
नृत्यारम्भैर्वनपरिसरे स्वागतं व्याहरन्ति ।
लोकान् वाचा मधुरसमुचा नार्चयन्ति क्षणं ये
तेषामीर्ष्याकलुषितगिरां "जीवनं भारभूतम्" ॥१॥
कालव्यालो दशति तरुणान् निर्घृणान् दीर्घमायु-
र्निन्दन्त्यन्ये विकलकरणाः पूरुषा जीर्णदेहा. ।
सस्यं शुष्यत्यनुदिनमितश्चान्यतो वारिपूरः
क्रूरः कालो नटति बहुधा "जीवनं भारभूतम्" ॥२॥
येषामन्त.करणसरणिर्योतरागानुषङ्गा
गङ्गाम्भोभिश्चिरपरिचयः सन्ततं साधुसङ्गः ।
सौजन्यश्रीललितवपुषामीदृशां भासते किं
कालेऽप्यस्मिन् मलिनचरिते "जीवनं भारभूतम्" ॥३॥
प्राक्पुण्यौघाद् गुणवति कुले जन्म लब्ध्वाऽप्य हृद्या
विद्यामुच्चैः पदमपि न ये त्यागलेशं भजन्ते ।
प्रातः-प्रातः पणकगणनव्याकुलानाममीषां
तृष्णादासीमुषितमनसां "जीवनं भारभूतम्" ॥४॥
खिस्तेश्रीबटुकनाथशास्त्रिणः

## १६. तीरे तीरे तरौ तरौ

कविताकर्मदक्षाणां कवीनां कल्पना नवा ।
नवा नित्यमहो याति तीरे तीरे तरौ तरौ ॥१॥ श्रीब्रह्मानन्दपाण्डेयस्य

## १७. तैजसी न पुनरस्तु चैतसी

हे दयाजलनिधे रघूत्तम देहि मे वरममुं मनोरथम् ॥
रामरूपप्रकृतिर्निरन्तरं तैजसी न पुनरस्तु चैतसी ॥१॥
श्रीरामरूपपाठकस्य

## १८. दमयन्ती

दमयन्त्यसुरारिवन्दना जनयन्ती निषधेन्द्रमन्मथम् ॥
रमयन्त्यधिकं पतिं स्वकं दमयन्ती मम मानसे स्थिता ॥१॥
पं० श्रीवासुदेवशास्त्रिणः

## १९. धावन्ति कस्यां दिशि

कामेनोपहृतं मनो मलिनताक्रान्ता मतिः श्रीर्हृता
लक्ष्यं क्वापि न लक्ष्यते श्रुतिहिता सुप्ता क्वचिद् भारती ।
अन्येषामनुकृत्य कृत्यमधुना विस्मृत्य मार्गं निजं
स्वच्छन्दा मुखराः पिशाचहतका धावन्ति कस्यां दिशि ॥ श्रीलक्ष्मीचन्द्रमिश्रस्य

## २०. न कालिदासादपरस्य वाणी

रसेन पूर्णा सरसीव रम्या नवं नवं भावमुपाहरन्ती ।
स्निग्धा मनोज्ञा तरुणीव हृद्या न कालिदासादपरस्य वाणी ॥१॥
प्रसादमाधुर्ययुतैर्वचोभिर्मनो जनानां प्रसभं हरन्ती ।
सुचारुहासा कमनीयवर्णा न कालिदासादपरस्य वाणी ॥२॥
यस्याः पदानां रचना श्रुतैव चमत्कृतिं कामपि सन्तनोति ।
स्वान्ते कवीनामथ भावुकानां न कालिदासादपरस्य वाणी ॥३॥
समर्पयन्ती मनसाधिगम्यं ब्रह्मप्रमोदस्य समानहर्षम् ।
श्लेषेण नित्यं रमणीव बाला न कालिदासादपरस्य वाणी ॥४॥
सन्दर्शयन्ती बहुभावभङ्गीर्नटी प्रगल्भेव सुरम्यरङ्गे ।
सम्प्रीणयन्ती सकलान् रसज्ञान् न कालिदासादपरस्य वाणी ॥५॥
सम्मोहयन्ती रसिकान् सुविज्ञान् सन्धारितैः सुन्दरदिव्यवेषैः ।
नटी विदग्धेव कलाप्रवीणा न कालिदासादपरस्य वाणी ॥६॥
सन्तर्पयन्ती चपलानि यूनां मनांसि भावेन रसाप्लुतेन ।
कटाक्षभारेण विमूर्च्छयन्ती दिव्याङ्गनेवातुलनीयशोभा ॥७॥
प्रसादयन्ती प्रियखिन्नचित्तं गुणग्रहैर्दोषनिवारणैश्च ।
सम्वर्धयन्ती बहुरागवृद्धिं न कालिदासादपरस्य वाणी ॥८॥
श्रीरामकुबेरमालवीयस्य

## २१. नरि नरि विजया वस्तुतः साविरस्तु

आलोलां कुन्तलालीं गलमनुगलितां व्यूह्य धम्मिल्ललीलां
व्याधुन्वानं सटाग्रं मृगपतिमनिशं तीव्रयन्ती महोग्रा ।
मुञ्चन्ती चन्द्रहासं खलबलनिकरे सैरिभं मृद्नती द्राक्
श्रीशक्तिर्भारतेऽस्मिन् नरि नरि विजया वस्तुतः साविरस्तु ॥१॥

श्रीमन्महेश्वरानन्दस्वामिनाम्

## २२. नारी नदी बुधजनैरवगाहनीया

चन्द्रोज्ज्वला कुमुदभा स्तनचक्रवाका गन्धाढ्यपद्मवदना स्मितविद्रुमोष्ठी ।
सम्पूर्णतापशमनी सरसा सुमध्या नारी नदी बुधजनैरवगाहनीया ॥ ॥

श्रीरामरूपपाठकस्य

## २३. पावको हिमशीतलः

सीतादेव्याः प्रभावेण लङ्का दग्धा महापुरी ।
हनूमतो महाकाये पावको हिमशीतलः ॥१॥
रटतो रामरामेति प्रह्लादस्य महात्मनः ।
श्रीनृसिंहप्रभावेण पावको हिमशीतलः ॥२॥

श्रीरामरूपपाठकस्य

## २४. पाण्डवं पण्डमेव

पूते शैलेन्द्रकीले तपसि धृतहृदः कौरवान् हन्तुकामाद्
एकान्ते कान्तरूपा विफलमुपगते फाल्गुनात्कोटियत्ने ।
स्वर्वेश्या कोमलाङ्गी स्मरशरदलिता चोर्वशीदं जगाद
गाण्डीवग्रन्थिगण्डस्थलमपि गणये पाण्डवं पण्डमेव ॥१॥

[illegible]
कर्णास्त्रैः पीडिताङ्गो न तु हतमधुना कर्णमाकर्ण्य पार्थाद् ।
निन्दन् गाण्डीवचापं मधुरिपुनिकटे धर्म एतज्जगाद
गाण्डीवग्रन्थिगण्डस्थलमपि गणये पाण्डवं पण्डमेव ॥२॥

चक्रव्यहाख्ययुद्धे निधनमुपगते वीरपुत्रेऽभिमन्या-
वस्तं सूर्यं विदित्वा हुतवहवपुषि स्वं वपुर्होतुकामम् ।
पार्थं दृष्ट्वा विशोको कुरुकुलकुमतिर्वाक्यमेतज्जगाद
गाण्डीवग्रन्थिगण्डस्थलमपि गणये पाण्डवं पण्डमेव ॥३॥

स्वजति कृष्णचन्द्रे निजजनबलदे सर्वसौभाग्यमूले
ह्याभीरैर्दुष्टचित्तैर्यदुकुलवनिता आहृता मार्ग एव ।
श्रुत्वेदं निन्द्यवाक्यं निजसहजमुखाद् धर्म एतज्जगाद
गाण्डीवग्रन्थिगण्डस्थलमपि गणये पाण्डवं पण्डमेव ॥४॥

तिष्ठत्यग्रे शिखण्डी निजनिधनकरः स्यन्दने फाल्गुनस्य
ह्येतद्दृष्ट्वा प्रवीरो विगतशरधनुर्वासरे शम्भुसंख्ये।
गङ्गापुत्रो महात्मा धृतहरिचरणो भीष्म एतज्जगाद
गाण्डीवग्रन्थिगण्डस्थलमपि गणये पाण्डवं पण्डमेव ॥५॥

श्रीरामरूपपाठकस्य

## २५. पिपीलिका चुम्बति चन्द्रबिम्बम्

त्वदास्यचन्द्रे हरिणायताक्षि श्यामायमानांस्तिलकान्निरीक्ष्य।
सञ्जायते मे हृदये विचारः पिपीलिका चुम्बति चन्द्रबिम्बम् ॥१॥
इन्दीवरं नेत्रयुगं सरस्या धूमाङ्कुरः कामदवानले किम्?।
शैवालमेवाम्बुनिधौ रुचेः किं पिपीलिका चुम्बति चन्द्रबिम्बम् ॥२॥
शैवालमिश्रेऽम्बुनि राजमार्गे समुज्ज्वलेऽस्मिन् प्रतिबिम्बितेन्दौ।
संवीक्ष्यमाणे कविभिर्निरुक्तं पिपीलिका चुम्बति चन्द्रबिम्बम् ॥३॥
वैज्ञानिकश्चन्द्रमनुप्रयातुं दिने दिने यत्कुरुते प्रयासम्।
श्रुत्वा जनास्तत् प्रहसन्ति सर्वे पिपीलिका चुम्बति चन्द्रबिम्बम् ॥४॥

श्री रामकुबेरमालवीयस्य

प्रोत्तुङ्गशृङ्गे तुहिनाचलस्य जनं समालोक्य चरन्तमूर्ध्वम्।
जल्पन्ति सर्वे वसुधास्थिता ये पिपीलिका चुम्बति चन्द्रबिम्बम् ॥१॥

श्रीरामायणद्विवेदिनः

सतीवियोगेन विषण्णचेतसा शम्भोः शयानस्य हिमालये गिरौ।
पिपासितोष्ठा हि सुधाभिशङ्कया पिपीलिका चुम्बति चन्द्रबिम्बम् ॥१॥

श्रीगणपतिशास्त्रिणः

## २६. पूषा विभूषा दिवः

लोकध्वान्तहरः सदा सुखकरः प्राणिप्रबोधप्रदः
पार्वत्या इव शङ्करः शिवकरो लक्ष्म्या इव श्रीपतिः।
इन्द्राण्या इव वासवो मदकरो मह्या महीराडिव
शर्वर्या इव चन्द्रमा हितकरः पूषा विभूषा दिवः ॥१॥ श्रीरामरूपपाठकस्य

भार्या पुत्रवती च शीलनिलया गेहस्य, योषा पुन-
र्दीपायाः, प्रभुता नयस्य, विनयः सद्वंशमुक्तामणेः।
कीर्त्तिः सत्पुरुषस्य, संयमवतो वैराग्यवृद्धिः परा
नैरुज्यं वपुषो, नृणां सुजनता, पूषा विभूषा दिवः ॥१॥
पुंसः सज्जनता, कुलस्य विमलाचारः सुतो, वाग्मिता
वैदुष्यस्य, पतिव्रतात्वमनघं सीमन्तिनीनां सदा।
विद्याया विनयो, नयस्य नितरां शक्तिः समृद्धिः स्थिरा
सन्मंत्री गृहिणां, सुधी नरपतेः, पूषा विभूषा दिवः ॥२॥

श्रीरतिनाथझाशर्मणः

## २७. बलीयसी केवलमीश्वरेच्छा

समाहृते तीर्थजले समन्तात् सर्वेषु कार्येषु सुसज्जितेषु ।
दातास्मि राज्यं गहनं ददामि बलीयसी केवलमीश्वरेच्छा ॥१॥

श्रीरामरूपपाठकस्य

## २८. भवतु भूतये भारती

स्फटिकमालिनी हेमकच्छपी धवलवस्त्रभृद् हस्तपुस्तिका ।
कविवरार्चिता हंस-वाहिनी भवतु भूतये भारती सदा ॥१॥

स्मितसुधाप्रभा भवततापहृत् मधुरभाषिणी कोकिलस्वरा ।
निखिलदर्शिका खञ्जनेक्षणा भवतु भूतये भारती सदा ॥२॥

मुखसुधाकराद् भवतहृन्नभस्तिमिरनाशकृत्पूर्णिमा शुभा ।
कुमुदभूषणा शर्वरी यथा भवतु भूतये भारती तथा ॥३॥

सकलकामदा कामधेनुका परमपावनी मुक्तिदायिनी ।
स्वजनपालिनी काशिका यथा भवतु भूतये भारती तथा ॥४॥

पतितपावनी जह्नुजा यथा शमनभीतिहृद् भानुजा यथा ।
शिवखनिर्नदी नर्मदा यथा भवतु भूतये भारती तथा ॥५॥

श्रीरामरूपपाठकस्य

## २९. भारती जयति

हृदयसरोवरतीरे सरभसकेलीकलाविलासमासन्ना ।
कलहंसीव कविना स्मेरमुखी भारती जयति ॥१॥

निर्मलशशधरवदना ज्योत्स्नास्मितखण्डिताखिलध्वान्ता ।
विबुधकुलस्पृहणीया श्रीरिव भारती जयति ॥२॥

श्रीगोपीनाथटण्डनस्य

श्वेताम्बुजासनस्था सुविमलवसना सुपूजिता देवैः ।
रमयन्ती कविचेतः स्मितवदना भारती जयति ॥१॥

विज्ञानैकशरीरा विद्वन्मानसविचारिहंसस्था ।
सहृदयमनोऽभिरामा नतसुखदा भारती जयति ॥२॥

श्रीरामायणद्विवेदिनः

यत्र मयूखैरिन्दुः वर्षत्यग्निं हिमायते च रविः ।
नृत्यति नटीव नियतिर्यन्त्रासौ भारती जयति ॥१॥

सौरभलुब्धान् भ्रमरान् सितयन्ती दन्तकान्तिपूरेण ।
कवितकाननकुञ्जे विहरन्ती भारती जयति ॥२॥

श्रीचन्द्रशेखरद्विवेदिनः

पंकजवदना पंकजसदना मदनारिणापि संसेव्या।
मतितिमिरभानुकान्तिः करुणार्द्रा भारती जयति ॥१॥
विकसितसरसिजसदना सस्मितवदना सितांशुचारुमुखी।
कविवृन्दकामधेनुः सुरवन्द्या भारती जयति ॥२॥
तिरयति तिमिरं दृष्टेः प्रकाशयत्यञ्जसा परं ज्योतिः।
प्रज्ञाञ्जनदा काचित् शलाकिका भारती जयति ॥३॥

श्रीवटुकनाथशास्त्रिखिस्तेमहाशयस्य

प्रवहति कविता-पूरो यस्मास्तिर्यग्विलोकनेनैव।
श्वेताम्बुजस्थिता सा कविवन्द्या भारती जयति ॥१॥

श्रीचन्द्रशेखरद्विवेदिनः

अज्ञानध्वान्तहरा सुरमुनिवन्द्या सरोजमध्यस्ता।
कुन्देन्दुशुभ्रसुषमा स्मितवदना भारती जयति ॥१॥

श्रीसूर्यप्रसादमिश्रस्य

शब्दार्थौ स्फुरयन्ती मनसि सदा मे स्थिता जगद्धात्री।
अन्तर्ध्वान्तनियन्त्री नित्यं सा भारती जयति ॥१॥
सा भारती जयति या कविवृन्दं सुसेविता नित्यम्।
तिरयन्त्यन्तर्ध्वान्तं सरसिजवदना मुदं नवां नयतु ॥२॥

श्रीब्रह्मानन्दपाण्डेयस्य

कविसूर्यकान्तकान्तिप्रतिभा-संगाद्विकासमापन्ना।
रससरिति संप्रजाता सरोजिनी भारती जयति ॥१॥

पं० श्रीरामकुबेरमालवीयस्य

## ३०. भूरियं भूरिभाग्या

सुविदितरघुवंशान् मेघदूताद् वरिष्ठात्
परममधुरभावात् सम्भवाङ्कात् कुमारात्।
सकलसुजनपाठ्यात् कालिदासस्य काव्यान्-
मिलितसकललक्ष्मीर् भूरियं भूरिभाग्या ॥१॥
वाराणस्यां बहुगुणखनौ जाह्नवीभूषितायां
गोष्ठीवक्षैरमृतवचनैः सोद्यमैर्दोषशून्यैः।
विज्ञैश्छात्रैः सरसकवितामालिकाकण्ठभूषैः
सम्पूर्णश्रीसुगुणसहिता भूरियं भूरिभाग्या ॥२॥
रीतेर्युक्तान् नूतनार्थात्सुशब्दात् सद्भावाढ्यात् सद्रसाद् भूषणाभात्।
पादन्यासात् कालिदासस्य वाण्याः सम्पूर्णश्रीर्भूरियं भूरिभाग्या ॥३॥
वाराणस्यां विश्वनाथस्य पुर्यां विद्वद्वृन्दैः सर्वशास्त्रप्रवीणैः।
विद्यापूर्णैः शिष्यवर्गैरगर्वैः सम्पूर्णश्रीर् भूरियं भूरिभाग्या ॥४॥

श्रीरामरूपपाठकस्य

## ३१. मशकदशनमध्ये दन्तिनः सञ्चरन्ति

पिबति चुलुकनीतं यत्र कश्चित् समुद्रं श्रवणकुहरतश्चेत् कोऽपि गङ्गां जहाति ।
वयमपि कथयामस्तत्र निःशङ्कमेवं मशकदशनमध्ये दन्तिनः सञ्चरन्ति ॥

श्रीलक्ष्मीचन्द्रमिश्रस्य

## ३२. मृगात् सिंहः पलायते

ननु व्यायामसातत्यं सम्पद्येत पलायते ।
हृष्टपुष्टात् कृशो जीर्णो मृगात् सिंहः पलायते ॥१॥

न बलं बलमित्याहुः, धैर्यमूलं तनोर्बलम् ।
धीरात् स्थिराशयाद् भीरुर्मृगात् सिंहः पलायते ॥२॥

यदि सत्ये मतिर्धर्मे, निश्चयस्य बलं यदि ।
तन्तुना बध्यते नागो, मृगात् सिंहः पलायते ॥

पं० श्रीवटुकनाथशास्त्रिखिस्तेमहाशयस्य

आङ्ग्लानुमिनामद्य भारते लब्धजन्मनाम् ।
चाकचिक्येन पाश्चात्य-साहित्यस्य तथाऽधुना ॥१॥

भारते वाङ्मयं भीतं, यदि त्वं स्वीकरोषि चेत् ।
तर्हि नूनमिदं सत्यं, मृगात् सिंहः पलायते ॥२॥

जरासन्धं पुरा दृष्ट्वा यदा कृष्णः पलायितः ।
तदारम्य प्रवादोऽयं, मृगात् सिंहः पलायते ॥३॥

मेघनादस्य ब्रह्मास्त्रमवलोक्य पुरा बली ।
वायुपुत्रोऽपि भीतो यन् मृगात् सिंहः पलायते ॥४॥

कुरङ्गाक्षीकटाक्षेण यतिसिंहोऽपि नारदः ।
पलायितः स्वर्भागाद् यन् मृगात् सिंहः पलायते ॥५॥

बिभेत्यल्पश्रुताद् वेदो गुरुर्मूर्ख-कुशिष्यतः ।
पिपीलिकाया हस्ती चेन् मृगात् सिंहः पलायते ॥६॥

श्रीएकेश्वरप्रसादनैयानिकवेः

प्रभावेण तपस्याया, आश्रमेषु महात्मनाम् ।
दृश्यते केलिवेलायां, मृगात् सिंहः पलायते ॥

श्रीगोरखप्रसादपाण्डेयस्य

उद्दीपितोऽप्रियैर्दशब्दैः, यज्ञाश्वरक्षकान् प्रति ।
लवो धीरः समीपस्थान्, मृगात् सिंहः पलायते ॥१॥
स्ववेध्यं हतमन्येन दृष्ट्वा क्रुद्धो धनञ्जयः ।
व्याधवेषं प्रति शिवं मृगात् सिंहः पलायते ॥२॥

श्रीरामायणद्विवेदिनः

यद्युच्यते त्वया तात शशशृङ्गं भवत्यहो ।
तर्हि स्वीक्रियतां साधो मृगात् सिंहः पलायते ॥१॥

सैनिकाच्चीनदेशीयाद् भारतीयो बिभेति नो ।
कुत्रचित्किं त्वया दृष्टं मृगात् सिंहः पलायते ॥२॥

शाखामृगवरेण्याद् पल्लंकायां समराङ्गणे ।
बिभेति राक्षसव्याघ्रो मृगात् सिंहः पलायते ॥३॥

पुरुषो बलवान्नैव कालो हि बलवान्मतः ।
क्वचिद्विषं सुधा जातु मृगात् सिंहः पलायते ॥४॥

मृगः पलायते सिंहाच्छ्येनात्पक्षी पलायते ।
भ्रान्त्या श्येनो द्विजाच्चैव मृगात् सिंहः पलायते ॥५॥

भुक्त्वा संतृप्तहृदयो नाहारं कुरुते पुनः ।
भुक्तः संतुष्टहृदयो मृगात् सिंहः पलायते ॥६॥

स्वबालसदृशं मौग्ध्यं वीक्ष्य सिंह्या दयार्द्रया ।
वधान्निवारितो बालो मृगात् सिंहः पलायते ॥७॥

सिंहीं स्वकामिनीं दृष्ट्वा कामसंवेगपीडितः ।
वधार्थं यतमानोऽपि मृगात् सिंहः पलायते ॥८॥

यावदयक्षिमृगो मृगां कटिसिंहस्तु यत्र ते ।
पलायते महच्चित्रं मृगात् सिंहः पलायते ॥९॥

मृगः पलायते सिंहान्मृगात् सिंहः पलायते ।
उभौ मृषा प्रिये तेऽङ्के सुखेन वसतिर्द्वयोः ॥१०॥

महाद्धि महतामेवोपरि दर्शयते बलम् ।
गजराजं समुद्वीक्ष्य, मृगात् सिंहः पलायते ॥११॥

कांचनं हरिणं धर्तुमन्यायात्स्वकरेण सः ।
बिभेति यतिसिंहोऽपि, मृगात् सिंहः पलायते ॥१२॥

बुभुक्षोद्गतनिद्रः सन् मृगयूथं प्रविश्य सः ।
भुक्त्वा मृगं ततः प्रीतो मृगात् सिंहः पलायते ॥१॥

दरीमुखात्समुत्प्लुत्य संवेगेन मुहुर्मुहुः ।
मृगान्मृगं मृगं भोक्तुं मृगात् सिंहः पलायते ॥२॥

महासत्त्ववतो जन्तोः क्रिया हि बलवत्तरा ।
अतिशीघ्रं जवाधिक्यान् मृगात् सिंहः पलायते ॥३॥

समानशीलरूपेषु सख्यं दृढतरं सदा ।
मैत्रीं कामयमानाद्धि मृगात् सिंहः पलायते ॥४॥

भक्ष्यरूपपदार्थाद्धि न हि कोऽपि पलायते ।
नान्नात्पलायते ना न मृगात् सिंहः पलायते ॥५॥

स्वयं हत्वा तु कामो हि जीवन्तं प्राणिनं सदा ।
स्वयमेव मृतात्क्षुद्रान्मृगात् सिंहः पलायते ॥६॥
धनुः संहितबाणालिधानुष्कं वीक्ष्य संमुखम् ।
अयाङ्कसंस्थिताद्भीतो मृगात् सिंहः पलायते ॥७॥
नायिकायाः कटिं दृष्ट्वा हठात्सिंहः पलायते ।
कथमुक्तं जनैर्लोके मृगात् सिंहः पलायते ॥८॥
शिखण्डिनं पुरो दृष्ट्वा भीष्मः शस्त्रं समत्यजत् ।
किंवदन्ती प्रसिद्धाऽतः मृगात् सिंहः पलायते ॥९॥
पं० रामकुबेरमालवीयस्य

जटाटवीभ्रमद्-गंगामृतपानमदोत्कट. ।
शिवस्येन्दुगताद्ध्वान्तो मृगात् सिंहः पलायते ॥१॥

साधनाकेसरालीढो दरीरामाङ्कलोलुप ।
सदायतिर्यतिर्लोक-मृगात् सिंहः पलायते ॥२॥ श्रीगोपीनाथदण्डनस्य

विषायते सुधा क्वापि विवस्वांश्च हिमायते ।
ईश्वरेच्छाबलात्क्वापि मृगात् सिंहः पलायते ॥१॥
विज्ञानहरिणात् पीनाद् हर्मसिंहः पलायित ।
नास्ति मिथ्याप्रवादोऽयं मृगात् सिंहः पलायते ॥२॥
श्रीचन्द्रशेखरद्विवेदिन

बलीयसी न सम्पत्तिः शक्तिर्नैव बलीयसी ।
बुद्धिर्बलीयसी विद्वन् मृगात् सिंहः पलायते ॥१॥
हरिर्विदिष्यते लोके हरेरिच्छा बलीयसी ।
अतस्तदिच्छया शक्यं मृगात् सिंहः पलायते ॥२॥
पं० श्रीब्रह्मानन्दपाण्डेयस्य

कस्तूरी जायते कस्मात् को हन्ति करिणां कुलम् ।
किं कुर्यात् कातरो युद्धे मृगात् सिंहः पलायते ॥१॥
श्रीहेमराजपोडेलमहाशयस्य

अभिमन्युना समाक्रान्तं कुरुराजं पलायितम् ।
वीक्ष्य व्योम्नि जगुर्हाहा मृगात् सिंहः पलायते ॥१॥
मृगः पलायते सिंहाद् इत्यास्तां लौकिकी कथा ।
हरचन्द्रस्थिताद्ध्वान्तो मृगात् सिंहः पलायते ॥२॥
श्रीसूर्यप्रसादमिश्रस्य

पञ्चाननस्यपाणिस्याज्-जरामृत्युविवर्जितात् ।
पार्वत्या वाहनं सौम्यो मृगात् सिंहः पलायते ॥१॥
मृत्युञ्जयात् सुधासिक्ताच्-चन्द्रक्रोडनिवासिन ।
राहुवाहो हतोत्साहो मृगात् सिंहः पलायते ॥२॥
श्रीरामरूपपाठकस्य

## ३३. मेरुर्न मे रोचते

वैदेही समुवाच दोहदवती प्राणेश्वरं राघवं
वाल्मीक्यादिमुनीश्वरैः परिवृते मन्दाकिनीशीतले ।
वाञ्छा मे प्रबला विहारकरणे सच्चित्रकूटे गिरौ
सामीप्यार्ककरप्रतप्तशिखरो मेरुर्न मे रोचते ॥१॥

चित्रैः पुष्पचयैर्महेन्द्रधनुषा भूमिं दिवं रञ्जयन्
नृत्यत्केकिनिनादनादितवनो राधामुकुन्दप्रियः ।
कालिन्दीजलजातवातशिशिरो गोवर्धनो मे धनं
ह्यासन्नार्ककरप्रतप्तशिखरो मेरुर्न मे रोचते ॥२॥

श्रीरामरूपपाठकस्य

दैवीं सम्पदमुन्नयन्त्यनुपदं लोकस्य संरक्षणे
कल्याणी जयतीह मानवगणे गीर्वाणवाणी चिरात् ।
तस्या अभ्युदयेऽन्तरायरचना तन्वन् सुरावासतां
सम्प्राप्तोऽपि जनप्रमोदजननो मेरुर्न मे रोचते ॥१॥

यो दीनोऽपि विपद्यमानजनतासेवाव्रते दीक्षितो
देहेनापि विपत्पयोधिपतितोद्धाराय सञ्चेष्टते ।
धन्यः सर्वसमर्पणप्रवणतासारः स हारो भुवः
किन्तु स्वर्णमयोऽपि पूर्णकृपणो मेरुर्न मे रोचते ॥२॥

श्रीरतिनाथझाशर्मणः

## ३४. यत् प्राप्य नाप्यं परम्

स्वर्गः कश्चन नाम तिष्ठतु परं सम्मोहमुत्पादयन्
प्रायो बुद्धिमतां विवादविषयो मोक्षोऽप्यसौ तिष्ठतु ।
अस्माकं तु मनोज्ञलोलकबरीच्छायासमासेविना-
मिष्टं पात्रकमेकमेव मधुनो यत्प्राप्य नाप्यं परम् ॥१॥

वासप्रीतिकराण्यनेकभवनान्याकाशचुम्बीनि नो
दत्तानि प्रियमण्डनानि ललितान्यङ्गानि नापि त्वया ।
किन्त्वापीश्वर ! तावकी सुमहती जाता कृपा मय्यहो
दत्तं पीडनशीलमेव हृदयं, यत्प्राप्य नाप्यं परम् ॥२॥

सर्वस्वं मनसो हृतं च हृदयं चट्टाकमुत्पादितं
सायं कुत्रचनान्तरायबहुले देशे तया प्राप्तया ।
नीचैः कृत्य शनैर्दृशौ प्रमदया दृग्भङ्गमामन्त्रितं
प्राप्तं तत्क्षणमेव तन्नतु मया यत्प्राप्य नाप्यं परम् ॥३॥

श्रीजगन्नाथपाठकस्य

स्वर्णस्तम्भसुलम्बिता हि भुजगी दृष्टा दृशा साम्प्रतं
मुग्धे मामदशत्कराद् विलुलिता स्वर्णप्रभे वेणिभृद् ।
दत्वा चुम्बनमौषधं स्मितमुखं मां जीवय क्रोधने
पुण्यं तद्धि भवेत्सदाबहुविधं यत्प्राप्य नाप्यं परम् ॥१॥

वर्षावर्णनम्

कालिन्दीतटिनीतटे विकसिते जाते कदम्बाकरे
नृत्यं कुर्वति नीलकण्ठनिकरे सार्द्धं प्रियाभिर्मुदा ।
गोपीमण्डलमण्डितस्य चपला राधालताधारिणः
कामद्रोर्हसितं स्मरामि हृदि तद् यत्प्राप्य नाप्यं परम् ॥२॥

वसन्तवर्णनम्

साकेते सरयूतटे विकसिते नव्ये रसालव्रजे
गानं कुर्वति मत्तकोकिलगणे सार्द्धं प्रियाभिर्मुदा ।
वाचाले भ्रमराकरे मलयजे वात्याशुगे सीतया
दृष्टं राममुखं स्मरामि हृदि तद् यत्प्राप्य नाप्यं परम् ॥३॥

ग्रीष्मवर्णनम्

उत्फुल्लात्स्थलपीतपङ्कजवनाद् उद्धूतधूलिव्रजे
वात्याभिः परितो विवर्तितगतौ खे मध्यदण्डोपमे ।
गङ्गामस्तकराजितं कनकजं छत्रं विलोक्याद्भुतं
शम्भोस्तन्नटनं स्मरामि हृदये यत्प्राप्य नाप्यं परम् ॥३॥

श्रीरामरूपपाठकस्य

## ३५. यावत् समुज्जृम्भते

रे दन्तावल, सावलेपमतुलं वप्रक्रियाकौशलं
तावत्त्वं परिदर्शयेरिह पुरो लोकस्य संपश्यतः ।
साटोपोत्कटसत्कटप्रकटितोद्दामाम्बुपानच्छटां
धातुं कोऽपि सटालकेसरियुवा यावत् समुज्जृम्भते ॥१॥

तावत् कोकिल, काकलीं न कलयेरम्भोजिनीरञ्जनं
मुञ्चेर्गुञ्जनमञ्जनाभ मधुप त्वं चापि सञ्चिन्तितम् ।
तावत् केकिकुल, स्वलास्यकुशलारम्भं न सम्भावये-
र्नो दावानलशामको जलधरो यावत् समुज्जृम्भते ॥२॥

भिन्धिच्छिन्धि विमर्दयार्दय जहि प्रोञ्छ क्षिणु क्षोभये-
त्याध्मानोऽद्रिषु भारतीयबलिनां यावत् समुज्जृम्भते ।
तावन्मार्गय चीनसैनिक निजप्राणावनायावनि
दुर्गं वा परिखां दरीं प्रियतमावासोऽन्तरं वाञ्चलम् ॥३॥

श्रीरतिनाथशर्मणः

भ्रातर्मुञ्च मिलिन्द ! पङ्कजवनासङ्गं मरन्दं वने
लीलान्दोलितवल्लरीसुमनसां वृन्दे पुनः प्राप्नुयाः ।
तावत्ते विनिवर्तनाऽवधिरयं बन्धादितो भानुमान्
पायोजानि निमीलयन् जलनिधौ यावन्न धत्ते पदम् ॥१॥

पौराणां परिषत्सु बान्धवजनेष्वानन्दसन्दोहद-
स्नेहोदारसुहृत्कथासु गृहिणीविस्रम्भवार्तास्वपि ।
तावद्भाति सदादरो नरमणेर्देवाद् रसज्ञातले
देहीत्यक्षरदुर्निबन्धरचना यावन्न धत्ते पदम् ॥२॥

आकृष्टैर्जटिलैः पदैः कतिपयैरस्यानसंस्थापितै-
श्छन्दोबन्धनबन्धुराऽपि भणितिर्न स्यात् प्रशस्ता विदाम् ।
मृद्वीकामधुमाधुरीसहचरी नैसर्गिकी वाग्झरी
विद्वन्मानसजित्वरी कविमुखे यावन्न धत्ते पदम् ॥३॥

श्रीवटुकनाथशास्त्रिखिस्तेमहाशयस्य

## ३७. रक्षेदक्षेमहारी हरिरमरवरैरीडितः पीडितं माम्

प्रत्यक्षं निर्जराणां सकलसुरगणाध्यक्षमात्मप्रतीक्ष्यं
संतक्ष्याक्षुद्रवेगः क्षतवहणमदः क्षीणयक्षेशदाक्ष्यः ।
विशत्यक्षः क्षणेनाभजत समुचितां शिक्ष्यतां यस्य सद्द्राग्
रक्षेदक्षेमहारी हरिरमरवरैरीडितः पीडितं माम् ॥१॥

श्रीमन्महादेवशास्त्रिणाम्

## ३८. राष्ट्रोन्नतौ बाधकाः

... बहवः परस्परमतद्वन्द्वेन मोहं गताः
शास्तारो धनलोलुपा धनिकता लग्नाऽधिके सञ्चये ।
... लोका निरुत्साहिनः ...
... च गता गृहे परगिरा राष्ट्रोन्नतौ बाधकाः ॥

तावच्चीन विवेकहीन विचरेः शीताचलाभ्यन्तरे
तावच्चापलमाचरेः करधृतैर्द्विष्टैर्निजास्त्रैरपि ।
दिग्दन्तावलदानसिन्धुलहरीसंशोषणोऽयं क्षणाद्
गर्जन् भारतकेसरी हिमगिरौ यावत् समुज्जृम्भते ॥१॥
सङ्ख्ये ख्यापयितुं बलं विजयते सङ्ख्यैव न श्रेयसी-
त्युन्मत्ताश्चिपिटेक्षणा हतधियस्तावत्सुखं गर्जत ।
युष्मत्सैनिकरक्तबीजदनुजश्रेणी बुभुक्षातुरा
जिह्वा भारतचण्डिकास्यकुहराद् "यावत् समुज्जृम्भते" ॥२॥
तावन्नूतनवञ्चनाविरचने चातुर्यमुच्चावचं
माधुर्यं सितशर्करासहचरं वाचामिदञ्जीवति ।
सम्यम्मन्य ! निगूढकल्मषमषीकल्माषिताभ्यन्तर !
त्वद्दुष्कर्मकलाविलासलशुनो "यावत् समुज्जृम्भते" ॥३॥
श्रीबटुकनाथशास्त्रिखिस्तेमहाशयस्य

## ३६. यावन्न धत्ते पदम्

किं वाणि, त्वरसे पलायितुमितो मच्चेतसः साम्प्रतं
धैर्योत्साहविवेकबोधसुहृदः किं मां मुधा मुञ्चथ ।
तावद् यूयमतिस्थिरं मम हृदि स्यातुं दयध्वं ध्रुवं
लक्ष्मीर्दुर्गुणभूषणा मम पुरो यावन्न धत्ते पदम् ॥१॥
वैराग्यस्य कथाऽन्यथा, प्रवचनं ज्ञानस्य निष्किञ्चनं,
स्वाध्यायो विधुरस्तपो बहुविधं व्यर्थं, क्रिया निष्फला ।
तीर्थेषु भ्रमणं, वने निवसनं सर्वाणि तावन् मुधा
भक्तिर्निर्वृतिशेवधिर्हृदि हरे यावन्न धत्ते पदम् ॥२॥
आत्मानं बहु मन्यते, कुटिलया दृष्ट्या परान् वीक्षते
तैस्तैरिङ्गितचेष्टितैः प्रकुरुते पाण्डित्यविज्ञापनम् ।
अल्पज्ञेषु विकत्थतेऽबुधजनस्तावत् सभामण्डपे
कश्चित् पण्डितराज आर्यचरितो यावन्न धत्ते पदम् ॥३॥
दग्धा तस्य विदग्धता, रसिकता पांसूत्करे मर्दिता
सारासारविवेचनप्रवणता पूर्णं विचूर्णीकृता ।
यस्य स्वच्छतमे मनस्यनुपमे केलीगृहे सुन्दरे
सोत्कण्ठं कविभारती विलसितुं यावन्न धत्ते पदम् ॥४॥
आमोदैर्मदिरं कलाभिरमलं ज्योत्स्नाभिराभासितं
सौन्दर्यामृतवीचीभिर्विलसितं चित्रैर्विचित्रीकृतम् ।
तावत् केलिनिकेतनं न तनुते शृङ्गारसम्भावनां
कान्ता कापि निनादिनूपुरनुता यावन्न धत्ते पदम् ॥५॥
श्रीरतिनाथझाशर्म्मणः

भ्रातर्मुञ्च मिलिन्द ! पङ्कजवनासङ्गं मरन्दं वने
लीलान्दोलितवल्लरीसुमनसां वृन्दे पुनः प्राप्नुयाः ।
तावत्ते विनिवर्तनाऽवधिरयं बन्धादितो भानुमान्
पाथोजानि निमीलयन् जलनिधौ यावन्न धत्ते पदम् ॥१॥
पौराणां परिषत्सु बान्धवजनेष्वानन्दसन्दोहद-
स्नेहोदारसुहृत्कथासु गृहिणीविस्रम्भवार्तास्वपि ।
तावद्भाति सदादरो नरमणेर्देवाद् रसज्ञातले
देहीत्यक्षरदुर्निबन्धरचना यावन्न धत्ते पदम् ॥२॥
आकृष्टैर्जटिलैः पदैः कतिपयैरस्थानसंस्थापितै-
श्छन्दोबन्धनबन्धुराऽपि भणितिर्न स्यात् प्रशस्ता विदाम् ।
मृद्वीकामधुमाधुरीसहचरी नैसर्गिकी वाग्झरी
विद्वन्मानसजित्वरी कविमुखे यावन्न धत्ते पदम् ॥३॥
श्रीबटुकनाथशास्त्रिखिस्तेमहाशयस्य

## ३७. रक्षेदक्षेमहारी हरिरमरवरैरीडितः पीडितं माम्

प्रत्यक्षं निर्जराणा सकलसुरगणाध्यक्षमात्मप्रतीक्ष्यं
संतक्ष्याक्षुद्रवेगः क्षतवहणमदः क्षीणयक्षेशदाक्ष्यः ।
विशल्यक्षः क्षणेनाभजत समुचितां शिक्ष्यतां यस्य सद्वाग्
रक्षेदक्षेमहारी हरिरमरवरैरीडितः पीडितं माम् ॥१॥
श्रीमन्महादेवशास्त्रिणाम्

## ३८. राष्ट्रोन्नतौ बाधकाः

नेतारो बहवः परस्परमतद्वन्द्वेन मोहं गताः
शास्तारो धनलोलुपा धनिकता लग्नाऽधिके सञ्चये ।
भोज्याच्छादनहीनदीनवदना लोका निरुत्साहिनः
प्राबल्यं च गता गृहे परगिरा राष्ट्रोन्नतौ बाधकाः ॥
श्रीलक्ष्मीचन्द्रमिश्रस्य

## ३९. वधूः श्वशुरमिच्छति

हिडिम्बा भीमदयिता, निदाघे घर्मपीडिता ।
स्तनवस्त्रं परित्यज्य, वधूः श्वशुरमिच्छति ॥ श्रीगणपतिशास्त्रिणः

## ४०. विन्दति सुखम्

शयाना हस्ताब्जे मधुरमुपधायाधरपुटं
हरेरास्याम्भोजप्रसृतपवनावीजिततनुः ।
मुहुर्मन्दं वश्यङ्गुलिभिरपि. सवाहितपदा
तयाप्येषा वंशी स्वपिति नहि संविन्दति सुखम् ॥१॥
श्रीरामकुबेरमालवीयस्य

नित्यं स्वपाठ्यविषयाध्ययनप्रवृत्तः पीयूषजिन्मधुरवाक्शुभशीलयुक्तः ।
नम्रो नितान्तकुशलो व्यसनैर्वियुक्तश् छात्रो हि विन्दति सुखं गुरुभक्तिलीनः ॥१॥

कृपाकटाक्षामृतभक्ततापहृत् कृष्णाय तुभ्यं नम उद्गिरन्ति ये ।
सुधामतुल्याः शरणं समागताः सदैव विन्दन्ति सुखं हि ते नराः ॥२॥

हेमन्तवर्णनम्

नवान्नपूर्णासहिते स्मितोज्ज्वले श्रीविश्वविद्यालयपण्डितानने ।
संतापहीनां नवकुन्ददन्तभां ज्ञा वीक्ष्य विन्दन्ति सुखं सरस्वतीम् ॥३॥

श्रीरामरूपपाठकस्य

## ४१. वीणाप्रवीणमिह वस्तु ममाविरस्तु

कुन्देन्दुसुन्दरवपुर्नवरत्नभूषं, श्वेताम्बरं स्मितसुधाजनतापहारि ।
त्रैलोक्यपूज्यचरणं कलहंसयानं, वीणाप्रवीणमिह वस्तु ममाविरस्तु ॥१॥

श्रीरामरूपपाठकस्य

## ४२. शतचन्द्रं नभस्तलम्

गुरुशापात् स्मृतिभ्रष्टो याज्ञवल्क्यः स्वबुद्धये ।
अपश्यच्छारदां ध्यायन् शतचन्द्रं नभस्तलम् ॥१॥

श्रीरामरूपपाठकस्य

## ४३. शतसूर्यं नभस्तलम्

गयायां ज्ञानसम्पन्नो बोधिमूले दृढासनः ।
अपश्यन्मुदितो बुद्धः शतसूर्यं नभस्तलम् ॥२॥

श्रीरामरूपपाठकस्य

## ४४. शेते करी मशकपादविपादिकायाम्

किं वा विधातृनियमैः प्रतिबध्यमानो लोके कविर्भवति काव्यकलाप्रवीणः ।
किं पञ्जरे हि सुखमेति हरिः सदा किं शेते करी मशकपादविपादिकायाम् ॥१॥

शृङ्गं क्वचिज्जगति दृष्टमहो शशानां किं वा प्रसूननिकरो गगने प्रजातः ।
सत्यं त्वमेव वद किं प्रबलो मदान्धः शेते करी मशकपादविपादिकायाम् ॥२॥

विद्वत्प्रकाण्डपरिपूजितपादपद्मे लोके विराजति मयि प्रबले दिनेशे ।
त्वच्चेतसोऽतितिमिरं न पलायते चेच्छेते करी मशकपादविपादिकायाम् ॥३॥

किं प्रस्तरस्तरति वारिनिधौ विशाले किं वा सुवर्णहरिणः प्रथितो जगत्याम् ।
किं वोत्पतन् वियति नापि समस्ति किं वा शेते करी मशकपादविपादिकायाम् ॥४॥

श्रीरामकुबेरमालवीयस्य

## ४५. संस्कृतं राष्ट्रभाषा

यदा संस्कृतं राष्ट्रभाषाऽभविष्यत् तदा ब्राह्मणा वेदपाठे सुसक्ताः ।
यदा संस्कृतं राष्ट्रभाषाऽभविष्यत् तदा क्षत्रिया मेदिनीपालनोत्काः ॥१॥
यदा संस्कृतं राष्ट्रभाषाऽभविष्यत् तदा वैश्यवर्गा धनै रत्नपूर्णाः ।
यदा संस्कृतं राष्ट्रभाषाऽभविष्यत् तदा ह्यन्तजा नैजधर्मेऽनुरक्ताः ॥२॥
यदा संस्कृतं राष्ट्रभाषाऽभविष्यत् तदा तन्तुवाया रचन्तः सुकाव्यम् ।
यथा भोजराज्ये पटं क्षौमवस्त्रं सुवेक्ष्यन्ति हृष्टाः श्रुतास्तन्तुवायाः ॥३॥
यदा संस्कृतं राष्ट्रभाषाऽभविष्यत् सुनीतौ सुरक्ताः प्रजापालनेच्छाः ।
नृपालाः कृपार्द्राः सदा भारतेऽस्मिन् अवश्यं तदा रामराज्यं भवेन्नः ॥४॥

श्रीरामदवपाठकस्य

[ युग्मकम् ]

## ४६. साहित्यरत्नाकरः

क्षेमेन्द्राय दशावतारचरितं सद्वृत्तमैरावतं
श्रीहर्षाय च नैषधीयचरितं प्रत्यक्षकल्पद्रुमम् ।
श्रीमाघाय गुणत्रयाधिकगुणां माघप्रियां सुन्दरीं
श्रीकण्ठाय गुरून्नु रामचरितं श्रीमालतीमाधवम् ॥१॥

श्रीशाकुन्तलनाटकं मणिवरं श्रीमेघदूतं विभुं
श्रीमन्मालविकाग्निमित्रघटितां श्रीरामधेनुं हि ताम् ।
श्रेयोदायिकुमारसंभवघटं श्रीकालिदासायिने
प्रीत्याऽदाद् रघुवंशकाव्यममृतं साहित्यरत्नाकरः ॥२॥

श्रीरामदवपाठकस्य

## ४७. हारे हरे हिमकरे मकरे करे च

कृत्वा विधूतनमसः कुमुदावलम्ब्याः मालस्य तत्पदवरस्य नरेश्वरस्य ।
स्निग्धं मनो भवति मुग्धतमं क्रमेण हारे हरे हिमकरे मकरे करे च ॥

श्रीरविनाथशास्त्रिणः

समागते बहुगुणे समतो सुवाने संलक्षिते मृगमदैः कुपसंलपाग्नि ।
चेतः सदा सुहृतिनां रमते सुशीतं हारे हरे हिमकरे मकरे करे च ॥१॥

श्रीरामदवपाठकस्य

## ४८. हिमवानथ कम्पते

स्वामत्तुषारपातेऽपि कम्पते न कदापि यः ।
सोऽपि पार्वत्याः स्पर्शाद् हिमवानथ कम्पते ॥

श्रीलक्ष्मीकान्तमिश्रस्य

---

# ग्रन्थान्तमङ्गलम्

पं० श्रीरतिनाथशर्मणः

नामापि तेऽपनयतेऽपनयप्रपञ्चं दुर्वासनोल्लसितमानसवृत्तिभाजाम् ।
श्रीराम, रूपमनिरूप्यरसप्रसारं वन्दे कवीन्द्रनयनामृतमद्य सद्य. ॥१॥

रेखाभिरङ्कितमुदञ्चिततूलिकाभिः संरञ्जितं जयति किञ्चन चारुचित्रम् ।
सम्मोहनं सहृदयस्य परन्तु चित्र-काव्य सुवर्णघटितं न मुदेऽस्ति कस्य ?॥२॥

चित्रप्रपञ्चरचनाचतुरैकचुञ्चु-शिल्पेन कल्पितमनल्पगुणाभिरामम् । –
रूपात्मकं जगदिदं प्रसमीक्ष्य लोकः श्रीरामरूपमवलोकयतीव मुग्धः ॥३॥

व्याकर्तुमिच्छति परात्मनि जातु नाम-रूपात्मकं जगदिदं प्रकटीबभूव ।
संकल्पिते कविविधावपि काव्यसर्गे नामापि रूपमपि च स्फुरतीति चित्रम् ॥४॥

तैरेव वर्णनिवहै रमणीयरूपं चित्रं सुचित्रयति कारुवर कवीन्द्रः ।
यद्वीक्ष्य चेतसि चमत्कृतिमादधाना धन्या भवन्ति कृतिनोऽपि मुदं प्रपन्नाः ॥५॥

चित्रं तु मूकमपि वाञ्छितभावपूर्णं नानाविधं कथयतीव कथाप्रसङ्गम् ।
काव्यं नितान्तमुखरं ध्वनतीव किन्तु लोकोत्तरं किमपि कर्णरसायनं नः ॥६॥

या सद्गुणैरखिलसंस्कृतमानसानामन्योन्यबन्धनविधिं तु समेधयन्ती ।
दोषान् हृदस्त्सिरयति प्रसभं रसेन कल्याणिनी जयति सत्कविभारती सा ॥७॥

एकात्मतां द्रढयतीव समस्तदेशे या पञ्चमाञ्चितविपञ्चिकयैव वाणी ।
सा प्रीणयेन्निखिलभारतवासिनोऽद्य सद्बन्धुबन्धुरनिबन्धनबन्धनेन ॥८॥

सालङ्कृतिर्गुणवती रसभावरम्या मुग्धाङ्गनेव भणितिः कविकुञ्जराणाम् ।
चित्रप्रपञ्चरचनापि समुल्लसन्ती नाद्यापि बोधयति जीवितमात्मन- किम् ?॥९॥

अध्यात्मतत्त्वसुखबोधनलब्धकीर्त्तिः प्रीतिप्रदामरपुरापककर्मलक्ष्मी ।
पूर्णोदयोन्मुखजनोन्नयनार्चितश्रीः श्रीभारती जयतु सम्प्रति भारतस्य ॥१०॥

प्रेमामृतस्य कणिकापि जगत्यजस्रं वैरानुबन्धिदहनेन सुदग्धचित्तान् ।
आमोदयेद् यदि, कुतो न ततो लतेयं प्रेम्णः प्रमोदयतु सौरभसम्भृतापि ॥११॥

लोको मङ्गलतुन्दिलो विलसतु, स्मेरानना भारती
लक्ष्म्याः सङ्गमुरीकरोतु, सुजनो नन्दत्वमन्दाशयः ।
दैवीसम्पदुदेतु, हन्त ! पिशुनो वाचंयमो जायतां,
पर्जन्यार्पितजीवनैर्वसुमती शस्यैः समृध्नोत्वलम् ॥१२॥